तेर्चिषमेवेत्यत्रतच्छब्दार्थं व्याचष्टे॥ये सुखाकाशमिति॥सत्यलोकस्थमिति॥देशाव्यच्छेदेन किमिति व्याख्यायते मुख्यमेव ब्रह्म ब्रह्मशब्दावलं
बनं किं नोच्यते तत्राह॥गंतृगंतव्येति॥एतेभ्यो हेतुभ्यः सत्यलोकस्थं ब्रह्म न मुख्यमिति संबंधः॥मुख्यब्रह्मप्राप्तावपि पथ्योक्तव्यपदेशाभविष्यं
तीत्याशंक्याह॥सन्मात्रेति॥तदनुपपत्तेर्नतादृक् ब्रह्म ब्रह्मशब्दमिति शेषः॥अनुपपत्तिमेव स्फारयति॥ब्रह्मैवेति॥तत्रेति॥मुख्यप्राप्तिः।

ये सुखाकाशमक्षिस्थं संयद्वामो वामनीर्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च तेषामन्यत्कर्म भवतु मा
वाभूत्सर्वथापि तेऽर्चिषमेवाभिसंभवंत्यर्चिरभिमानिनीं देवतामभिसंभवंति प्रतिपद्यंत इत्यर्थः॥अर्चिषोऽर्चिर्देवताया अह
रहरभिमानिनीं देवतामह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतामापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्
मासानुत्तरायणदेवतां तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां॥ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चंद्रमसो विद्युतं

यदि च नार्चिषमेवाभिसंभवंत्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मा
सेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः॥

१ तत्तत्रस्थान्पुरुषः क
श्चिद्ब्रह्मलोकादेत्य अमानवोऽमानव्यां सृष्टौ भवोऽमानवो न मानवोऽमानवः पुरुषः एतान्ब्रह्म सत्यलोकस्थं गमयति गंतृगं
तव्यगमयितृत्वव्यपदेशेभ्यः सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेः ब्रह्मैव सन्ब्रह्माप्येतीति हि तत्र वक्ष्यन्त्यायं॥सर्वभेदनिरासेन
सन्मात्रप्रतिपत्तिं वक्ष्यति॥न चादृष्टो मार्गो गमनायोपतिष्ठते॥

१ च्यते॥कस्यचिदपि सन्मात्रब्रह्मप्राप्तिरत्र नास्तीत्याशंक्याह॥सर्वभे
देति॥वक्ष्यति षष्ठे ध्यायेऽश्रुतिरिति शेषः॥जीवस्य सन्मात्रं ब्रह्म पारमार्थिकं रूपं चेदुपासकस्यापि न गतिकृचिंता तस्यापि ब्रह्मातिरिक्तस्वरूपाभा
वादित्याशंक्याह॥न चेति॥एकत्वलक्षणो मार्गो न दृष्टेर्द्वगमनायनोपतिष्ठते॥न हि ध्याननिष्ठस्यादृष्टमेकत्वं गमनं वारयितुं पारयत्यज्ञानप्र
तिबंधात्तस्य गमनभ्रांतिसंभवादित्यर्थः॥यद्वा॥एकत्वलक्षणो मार्गो नावगतो न गमनायमोक्षायोपस्थितो भवतीत्यर्थः तत्र प्रमाणमाह॥२॥

॥स एनमिति॥ स परमात्मा प्रत्यक्त्वेनाज्ञातः सन्नेनमधिकारिणं मुक्तिप्रदानेनेन पालयतीत्यर्थः॥प्रकृतां गतिमुपसंहरति॥एष इति॥गति-
फलं निगमयति॥एतेनेति॥इममिति विशेषणादनावृत्तिरस्मिन् कल्पे कल्पान्तरे तु आवृत्तिरिति सूच्यते॥आवर्तशब्दं व्याकरोति॥आवर्तन इ-
ति॥सफलायामयोक्तेन गति पूर्वकेन फलेन सहितायामिति यावत्॥कार्यब्रह्मोपासनसमुच्चिता कारणब्रह्मोपासना यथोक्तान विद्या सहि-
ता विद्यात्र विवक्षिता तस्यादित्यर्थः॥१५॥पूर्वोत्तरग्रन्थयोरसंगतिमाशंक्य प्रासंगिकीं संगतिमाह॥रहस्यप्रकरण इति॥रहस्यमुपास-

स एनमविदितो न भुनक्तीति श्रुत्यन्तरादेष देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितः पन्था देवपथ
उच्यते॥ब्रह्म गन्तव्यं तेन चोपलक्षित इति ब्रह्मपथ एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्म इमं मानवं मनुसंबन्धिनं मनोः सृष्टि-
लक्षणमावर्तं नावर्तन्ते॥आवर्तन्ते अस्मिन् जननमरणप्रबन्धचक्रारूढा घटीयन्त्रवत् पुनः पुनरित्यावर्तस्तं न प्रतिपद्यन्ते

स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते॥१५॥एष
॥ह वै यज्ञो योऽयं पवत
नावर्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था॥१५॥ रहस्यप्रकरणे प्रसंगा-
दारण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्थो विधातव्याः तदभिज्ञस्य च र्त्विजो ब्रह्मणो मौनमित्यत इदमा-

नंतरप्रकरणे विदुषां फलप्राप्तये मार्गोपदेशप्रसंगेन पञ्चस्य समाप्तिगमनायानंतरग्रन्थेन मार्गोपदेशादस्ति संगतिरित्यर्थः॥किंच पूर्वोत्तरग्रन्थ-
योरारण्यकत्वेन समानत्वादियं संगतिरस्तीत्याह॥आरण्यकत्वेति॥किंचाग्निविषया विद्या प्रकृता यज्ञे च सिद्धेऽग्निसंबन्धे यदि किमपि क्षतमुत्पद्येत तदा
प्रायश्चित्तार्था व्याहृतयो विधातव्या इत्यनंतरग्रन्थप्रवृत्तिरिति संगत्यन्तरमाह॥यज्ञ इति॥प्रकृतायामुपासनायां मौनमंगीक्रियते वाग्व्यापारे विक्षि-
प्तचित्ततया ध्यानानुष्ठानासिद्धेः ऋत्विग्विशेषस्य च प्रायश्चित्ताभिज्ञस्य मौनमत्र विधीयते तेनास्ति मिथः संगतिरित्याह॥तदभिज्ञस्येति॥यज्ञस्यैव
तीर्थेशनक्रमत्यागात्मकत्वात् क्रियायाश्च क्षणभंगित्वाद् गतिमत्त्वायोगान्मार्गोपदेशासंभवात् कथमाख्यासंगतिरित्याशंक्य गतिमत्त्वं संपादयति॥यज्ञस्य वा-

॥एष ह वा इत्यादिना॥ यज्ञो वा अयं वायो वा अयमात्मक इति श्रौतीप्रसिद्धिस्तामेव प्रकटयति॥ वायुप्रतिष्ठ इति॥ श्रुतीरुदाहरति॥ स्वाहेति॥ स्वाहा।
कारस्तु स्वाहाग्नये वायवे धीयते क्षिप्यते इति वा तेषां यज्ञः श्रुत्यन्तरमाह॥ अयमिति॥ आदिशब्देन वाता यज्ञः प्रयुज्यत इति श्रुतिर्गृह्यते॥ आदिशि
तश्रुतीनामर्थं संगृह्णाति॥ वान इति॥ यो यज्ञः क्रियासमवायी तत्समुदायात्मकः स वायुरेव हृद्यो श्चलनात्मकत्वाविशेषात्तस्माद्वायुप्रति
ष्ठः॥ तदात्मको यज्ञ इत्यर्थः॥ वायुप्रतिष्ठो यज्ञ इत्यत्र श्रुत्यन्तरमाह॥ वान एवेति॥ पवनश्रुत्यापि वायुयज्ञयोरेकत्वमाह॥ एष ह यन्निति॥
विनापि वायुना शुद्धिः सिध्यतीत्याशंक्याह॥ नहीति॥ अचलतो विहितक्रियामननुतिष्ठत इति यावत् शुद्धिर्नाम दोषनिरासः स च निषिद्धप्र

एष ह वै एष वायुर्योऽयं पवते। अयं यज्ञो ह वै इति प्रसिद्धार्थावद्योतकौ निपातौ वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु॥ स्वाहा वा
तेधा॥ अयं वै यज्ञो योऽयं पवत इत्यादिश्रुतिभ्यो वात एव हि चलनात्मकत्वात्क्रियासमवायी वात एव यज्ञस्यारंभको वातः प्र
तिष्ठितिः च श्रवणात् एष ह यन् गच्छन् चलन्निदं सर्वं जगत्पुनाति पावयति शोधयति न ह्यचलतः शुद्धिरस्ति दोषनिरसनं च च

एष ह यन्निदं सर्वं पुनाति यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्त्तनी तयोर॥

लतो हि दृष्टं न स्थिरस्य यद्यस्माच्च यन्नेष इदं सर्वं पुनाति तस्मादेष एव यज्ञो यत्पुनातीति तस्यास्यैवंवि ॥त्यन्तरं॥
शिष्टस्य यज्ञस्य वाक्च मन्त्रोच्चारणे व्यापृता मनश्च यथाभूतार्थज्ञाने व्यापृतं ते एते वाङ्मनसे वर्त्तनी मार्गौ याभ्यां यज्ञस्ताय
मानः प्रवर्त्तते वर्त्तनी प्राणा

((त्यक्तुं प्रकर्षेण त्यक्तुं प्रयतमानस्य सिध्यति॥ ननु निषिद्धक्रियात्यागोदासीनस्य दोषनिरासात्मिका शु
द्धिः संभवति चलनं च वायुस्तस्माद्वायुरेव चलनद्वारा सर्वं जगत्पुनातीत्याह॥ दोषेति॥ वायोरस्तु पावनत्वं प्रकृते किमायातमित्याशंक्याह
॥ यद्यस्मादिति॥ वाय्वात्मना गतिविशिष्टस्य यज्ञस्य मार्गद्वयमुपदिशति॥ तस्येति॥ एवंविशिष्टस्य पावनस्य वायुरूपस्येति यावत् यज्ञसो
क्रमार्गद्वयं वैशिष्ट्ये सोपस्कारमेतरेयवाक्यमुदाहरति॥ प्राणेति॥ प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां परिचलनं विद्यते यस्यास्तस्या वाच

संपाद्यते मनसा हि ध्यायन् वाचाभिव्याहरन् पूर्वापरीभावेन यज्ञं संपादयतीत्यर्थः ॥ यज्ञस्य मार्गद्वयविशिष्टत्वमुपसंहरति ॥ अत इति ॥ तयो
रन्योन्यमुपकार्योपकारभावं दर्शयति ॥ तयोरिति ॥ वाचा सम्यक् प्रयुक्तयेति शेषः संस्कृतायां च वाग्वर्त्तन्यां तयैव यज्ञो निष्पन्नो भवतीत्याह ॥ वा
चैवेति ॥ किं तर्हि मनोवर्त्तन्यां संस्क्रियत इत्याशंक्याह ॥ तत्रेति ॥ यज्ञस्य द्वाभ्यां मार्गाभ्यां नीयमानत्वे पूर्वोक्तरीत्या स्थिते सतीति यावन्मनोवर्त्त
न्याः संस्काराभावे प्रत्यवायं दर्शयति ॥ अथेत्यादिना मनोवर्त्तनी ब्रह्मणा वाग्वर्त्तनी च होतृप्रभृतिभिः संस्कार्येति व्यवस्थान्तरमित्यर्थः ॥ ५

प्राणापानपरिचलनवत्या हि वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञ इति हि श्रुत्यन्तरं अतो वाङ्मनसाभ्यां यज्ञो वर्त्तत इति वाङ्म
नसे वर्त्तनी उच्येते यज्ञस्य तयोर्वर्त्तन्योरन्यतरां वर्त्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मा ऋत्विग्वाचा वर्त्तन्या होताध्वर्यु
रुद्गातेत्येते त्रयोऽप्यृत्विजोऽन्यतरां वाग्लक्षणां वर्त्तनीं वाचैव संस्कुर्वन्ति तत्रैवं सति वाङ्मनसे वर्त्तनी संस्कार्ये यज्ञेऽथ स ब्रह्मा

मनसा सꣳस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतराꣳ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया
ब्रह्मा व्यववदत्यन्यतरामेव वर्त्तनीꣳ सꣳस्करोति हीयतेऽन्यतरा ॥ स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्त्तमा

यत्र यस्मिन्काले उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे पुरा पूर्वं परिधानीयाया ऋचो ब्रह्मैतस्मिन्नन्तरे काले व्यवव
दति मौनं परित्यजति यदि तदान्यतरामेव वाग्वर्त्तनीं संस्करोति ब्रह्मणाऽसंस्क्रियमाणा मनोवर्त्तनी हीयते विनश्यति छिद्री
भवति अन्यतरा स यज्ञो वाग्वर्त्तन्यैवान्यतरया वर्त्तितुमशक्नुवन् रिष्यति ॥ कथमिवेत्याह स यथैकपात्पुरुषो व्रजन्गच्छन्न

ध्वानं रिष्यति रथो वैकेन चक्रेण वर्त्तमानो गच्छन् रिष्यति ॥

स ब्रह्मेत्यन्वयं सूचयति ॥ ब्रह्मेति ॥ पुनरुक्तिस्तस्य क्रियापदेन संबन्धद्योतनार्था
॥ एतस्मिन्नन्तरे काले प्रातरनुवाकशस्त्रमारभ्य तत्परिसमाप्तेरन्तरावस्थायामित्यर्थः ॥ वाचो होत्रादिभिः संस्कार्यत्वमस्तु मनसस्तु ब्रह्मसंस्का
र्यत्वमा भूदेतावता यज्ञे किमायातमित्याशंक्याह ॥ स यज्ञ इति ॥ यज्ञभ्रंशमेव वाक्यांशद्वारा व्युत्पादयति ॥ कथमित्यादिना नाशोऽपि यज्ञस्य

यज्ञमाणो हीति ॥ वाग्वर्तनीसंस्काराभावे पितुल्ये दोषे मौनगुणं दर्शयति ॥ अथ पुनरिति ॥ तथैव सम्यगनुष्ठानादूति यावत् तथा स-

एवमस्य यजमानस्य कुब्रह्मणो यज्ञो रिष्यति विनश्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति यज्ञप्राणो हि यजमानोऽतो
युक्तो यज्ञरेषे रिषणं तस्य सतं यज्ञमिष्ट्वा तादृशं पापीयान्पापतरो भवत्यथ पुनर्यत्र ब्रह्मा विद्वान्मौनं परिगृह्य वाग्विस-
र्गमकुर्वन्नास्ते यावत्परिधानीयाया नव्यववदति तथैव सर्वे ऋत्विजः उभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरापि किमिवे-
त्याह पूर्वोक्तविपरीतौ दृष्टान्तौ एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेनात्मनाऽविनश्यन्वर्त्तते।

रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवत्यथ यत्रोपाकृते प्रातरनुवा-
के न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा स यथोभयपाद्व्रजन्रथो वो-
भाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा
श्रेयान्भवति ॥ १६ ॥ प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान्प्रावृहद् ॥ १ ॥ तद्वदित्यर्थः ॥ यज्ञं प्रतितिष्ठन्तं यज-
मानोऽनुप्रतितिष्ठत्येवं मौनविज्ञानविशिष्टब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान्भवति श्रेष्ठो भवतीत्यर्थः ॥ १६ ॥ अत्र ब्रह्मणो मौनं विहि-
तं तस्मिंश्च तद्रूपेण ब्रह्मत्वकर्मणि चार्थादन्यस्मिंश्च होत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति तदर्थं व्याहृतयो विधातव्या इ-
त्याह ॥ प्रजापतिर्लोकानभ्यतपल्लोकानुद्दिश्य तत्र सारं जिघृक्षया ध्यानलक्षणं तपश्चचार तेषां तप्यमानानां लोकानां रसान्सा-
ररूपान्प्रावृहदुद्धृतवाञ्जग्राहेत्यर्थः ॥ कानग्निं रसं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः पुनरप्येवमेवाग्न्याद्यास्तिस्रो

ति ब्रह्मा चान्ये च ऋत्विजो द्वे वर्तन्यौ संस्कुर्वन्त्येवेत्याह तथैवेति ॥ वर्तनीद्वयसंस्कारे किं स्यादित्यपेक्षायामाह ॥ एवमिति ॥ १६ ॥ नित्यानुष्ठानमु-
क्त्वा नैमित्तिकप्रायश्चित्तविधानार्थमुपक्रमते ॥ अत्रेति ॥ तद्द्वेषब्रह्मणो मौनभ्रंशे सतीति यावत् रसान्विशेषतो ज्ञातुं पृच्छति ॥ कानिति ॥ एवं

तदेव विवृणोति ॥ भूरिति ॥ व्याहृतिमित्यादिना प्रथमोऽतः शब्दो यत इत्यस्मिन्नर्थे यदृक्त इति ऋक्शब्दस्तस्मिन्नुक्तप्रायश्चित्तमेवाकांक्षा-
पूर्वकं विवृणोति ॥ कथमित्यादिना क्रियाविशेषणमिति यज्ञस्य क्षतं संदधातीति यत्तदृचामेव रसेन संदधातीत्यर्थः ॥ ओजसा संदधातीति

तप्यन्तोऽपि सारं रसं त्रयीं विद्यां जग्राह तां पुनरभ्यतपत्त्रयीं विद्यां तस्यास्तप्यमानाया रसं भूरिति व्याहृतिमृग्भ्यो जग्रा-
ह भुव इति व्याहृतिं यजुर्भ्यः स्वरिति व्याहृतिं सामभ्यस्तान एव लोकदेववेदसामहाव्याहृतयो यत एतत्त्रयं यज्ञे यदि ऋ-
क्तः ऋक्संबंधाद्विमित्तं रिष्येद्यज्ञः क्षतं प्राप्नुयात् भूः स्वाहेति गार्हपत्ये जुहुयात्तत्र प्रायश्चित्तिः कथमृचामे-

त्रिं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान्प्रा-
वृहदग्नेरृचो वायोर्यजूंषि सामान्यादित्यात्स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसा-
न्प्रावृहद्भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यस्तद्यदृक्तो रिष्येत् भूः स्वाहेति गार्हपत्ये जुहु-
यादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टं संदधात्यथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षि-
णाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टं संदधात्यथ यदि सामतो रि-

तत्तदिति क्रियाविशेषणं रसेन च वीर्येणौजसा ऋचां यज्ञस्य ऋक्संबंधिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतरूपमस्य
नं संदधाति संधत्ते अथ यदि यजुष्टो यजुर्निमित्तं रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्तथा सामनिमित्तो रिष्येत्स्वः स्वा-
हेत्याहवनीये जुहुयात्तथा पूर्ववद्यज्ञं संदधाति ब्रह्मनिमित्ते तु रेषणे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात् ॥ १ ॥ १ ॥
संबंधः तथा च स तिपथोक्तसाधनेस्तीत्यर्थः ॥ यथा पूर्वस्मिन्प्रायश्चित्ते यज्ञस्य क्षतमिव रसेन होता संदधाति ॥ तथा द्वितीयतृतीय-
प्रायश्चित्तयोरपि यजुषां साम्नां च रसेनाध्वर्युरुद्गाता च तत्क्षतं संधत्त इत्याह ॥ पूर्ववदिति ॥ होत्राद्यपराधाधीनयज्ञभ्रंशे प्रायश्चित्तमु-

अथ यथोक्तप्रायश्चित्ते लिंगं दर्शयति ॥ एषा हीति ॥ ब्रह्मणस्त्रयीसारत्वे प्रमाणमाह ॥ अथ केनेति ॥ साधारणकार्यस्य साधारणसामग्रीज-
न्यत्वनियमाद्वेदत्रयसाधारणे ब्रह्मत्वे वेदत्रयसाधारणमेव प्रायश्चित्तं वाच्यं तूष्णींकोन्यायो दर्शितः ॥ संप्रत्यत्र सर्ववेदवाचकत्वप्रसिद्धे
ब्रह्मणः सर्ववेदार्थाभिज्ञस्य ज्ञानमाहात्म्येनैव दोषनिरासान्नान्यत्प्रायश्चित्तं विधेयमिति न्यायान्तरमाह ॥ न्यायान्तरं वेति ॥ वस्तुस्वभाववाच-
कत्ववैचित्र्यादुत्पन्नस्यापि क्षतस्य केनचित्संधानं भवतीत्यत्र दृष्टान्तानाह ॥ तद्यथेत्यादिना किं तत्र साधनमिति तद्दर्शयति ॥ क्षारेणेति ॥

एषा हि विद्यायाः सर्वेषां च केन ब्रह्मत्वमित्यनुपपन्नमेव त्रय्या विद्ययेति श्रुतेर्न्यायान्तरं त्वामृग्यं ब्रह्मत्वनिमित्ते रेषे तद्यथा ।
लवणेन सुवर्णं संदध्यात् क्षारेण टंकणादिना स्वरे गु मृदुत्वकरं हि तत् सुवर्णेन रजतमशक्यसंधानं संदध्याद्रजतेन तथा त्र-
पु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा चर्मबन्धनेनैवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया

स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति तद्यथा लव-
णेन सुवर्णꣳ संदध्यात्सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणैवमे-
षां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति भेषजकृतो ह वा एष यज्ञो यत्रै- "वंविद्ब्रह्मा भ"

वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं संदधाति भेषजकृतो ह वा एष यज्ञो रोगार्त इव पुमांश्चिकित्सके-
न सुशिक्षितेनैष यज्ञो भवति कोसौ यत्र यस्मिन्यज्ञे एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद्ब्रह्मर्त्विग्भवति स यज्ञस्य

खरे सुवर्णे वह्निसंयुक्ते द्रवीभूते क्षारप्रक्षेपेण टंकणादिना मृदुकरणं मिथोवयवसंयोजनं संधानं प्रसिद्धमित्यर्थः ॥ रजतं सुवर्णेन स्वर-
सतस्तावदशक्यं संधानं तथापि वह्निसंयोगपूर्वकं पूर्ववदेव तत्रापि प्रसिद्धं संधानमित्याह ॥ सुवर्णेनेति ॥ रजतेनेत्यादावपि यथोक्तं द्रष्टव्यं
॥ संदधाति ॥ ब्रह्मेति शेषः ॥ भेषजेनेव कृतः संस्कृत इति यावत् तदेव स्फुटयति ॥ रोगार्त इति ॥ भवति संस्कृत इति शेषः ॥

इतश्चैवंविदा ब्रह्मणा भवितव्यमित्याह ॥ किंचेति ॥ गाथाशब्दो गायत्र्यादिच्छन्दोव्यतिरिक्तच्छन्दोविषयः ॥ यतो यतः प्रदेशात्कर्मावर्तत इत्यु-
क्तं विवृणोति ॥ ऋत्विजामिति ॥ यत्र यत्र प्रदेशे यज्ञस्य क्षतिरध्वर्युप्रभृतीनामभवत्तत्र तत्र यज्ञस्य क्षतरूपं प्रायश्चित्तेन संदधानो ब्रह्मा क-

किंचैष ह वा उदक्प्रवणः उदङ्निम्नो दक्षिणोच्छ्रायो यज्ञो भवति उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः यत्रैवंविद्ब्रह्मा भवत्ये-
वंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषानुगाथा ब्रह्मणः स्तुतिपरा यतो यतः आवर्तते कर्म प्रदेशादृत्विजां यज्ञः क्षतीभवंस्तद्य-
ज्ञस्य क्षतरूपं प्रतिसंदधत्प्रायश्चित्तेन गच्छति परिपालयतीत्येतत् मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्ततो

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविद ᳪं ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्त-
द्गच्छति मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमान ᳪं सर्वा ᳪं श्चर्त्विजोऽभि-
रक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥ इति छान्दोग्योपनिषदि चतुर्थः प्रपाठकः ॥ ४ ॥

ब्रह्मैवैक ऋत्विक्कुरून् कर्तॄन् योद्धॄनारूढानश्वा वडवा यथाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं स-
र्वांश्चर्त्विजोऽभिरक्षति तत्कृत दोषापनयनात् यत एवंविशिष्टो ब्रह्मा विद्वांस्तस्मादेवंविदमेव यथोक्तव्याहृत्यादिवि-
दं ब्रह्माणं कुर्वीत नानेवंविदं कदाचनेति द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्य-
शंकरभगवत्पादकृतौ छान्दोग्योपनिषद्विवरणे चतुर्थः प्रपाठकः समाप्तः ॥

तीत्यपरिपालयतीति संबंधः ॥ ऋत्विजि ब्रह्मणि मा-
नवशब्दप्रवृत्तौ निमित्तद्वयमाह ॥ मौनेति ॥ ज्ञानातिशयः तच्छब्दार्थः कर्तॄनभिरक्षतीति संबंधः उक्तमर्थं दृष्टान्तेन प्रकटयति ॥ योद्धॄनित्यादि
नामकरणोऽर्थमुपसंहरति ॥ एवमिति ॥ ॥ इति श्रीभगवदानंदज्ञानकृतायां छांदोग्यभाष्यटीकायां चतुर्थोऽध्यायः ॥ ६ ॥ ७ ॥ ६ ॥

100

अथसटीकछांदोग्योपनिषद्भाष्यस्यपंचमोध्यायःप्रारभ्यते॥१

॥श्रीगणेशाय नमः॥ वृत्तमनूद्य वर्तिष्यमाणस्याध्यायस्य संगतिं संगिरते॥ सगुणेति॥ विद्यांतरं पंचाग्निविद्यातिरिक्ता सगुणविद्या तच्छीलि नां तन्निष्ठानामिति यावत् तामेव गतिमर्चिरादिलक्षणामित्यर्थः॥ ततो गतिः ह्यद्यात्तृतीयाच्च विद्याकर्मरहितानामिति शेषः॥ अथ क्रमेण मुक्तिसं भवादुत्तरा गतिरुच्यतां किमिति दक्षिणा तृतीया च संसाररूपा गतिरुक्तेति निकृष्टाव्यपदिश्यते नत्राह॥ कष्टतरेति॥ सगुणब्रह्मविद्यावतामर्चिराद्यां गतिमुक्त्वा समुच्चितानामसमुच्चितानां कर्मणां संसारगतिप्रभेदरूपं फलं वक्तुमयमारंभ इत्यर्थः॥ कर्मविधिभ्यश्च धनसंपत्तौ सत्यां भवतीति तत्संपत्ति श्च ब्राह्मणस्य श्रेष्ठत्वे सत्येव संभवतीति श्रैष्ठ्यसिद्धये प्राणोपासनं सर्वेत्रानुक्तं वक्तव्यमित्यनंतरग्रंथस्य संगतिं वदन्नसंगं करोति॥ प्राणः श्रेष्ठ इत्यादि॥

सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता। अथेदानीं पंचमेऽध्याये पंचाग्निविदो गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यांतरशीलि नां तामेव गतिमनूद्यान्या दक्षिणादिक्संबंधिनी केवलकर्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसार गतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते प्राणः श्रेष्ठो वागादिभ्यः प्राणो वाव संवर्गः प्राणो ब्रह्म प्राण आकाश इत्यादि बहुशोऽतीते ग्रंथे च

हरिः ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च

प्राणग्रहणं कृतं स कथं श्रेष्ठो वागादिषु सर्वैः संहत्यकारित्वाविशेषात्कथं च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधि त्सयेदमनंतरमारभ्यते यो ह वै कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणै

१ ना॥ प्राणो ब्रह्मेत्यादिवाक्यमादिशब्दार्थः उदाहृतानुदाहृत श्रुत्यंतरसमुच्चयार्थश्चकारः॥ प्राणस्य वागादिभ्यः श्रैष्ठ्यमुक्तमाक्षिपति॥ स कथमिति॥ सर्वैर्वागादिभिः संहत्य प्राणस्यैकार्यकरत्वे संप्रतिप न्ने स एव कथं तेषु श्रेष्ठो विधीयते तेषामन्यतमस्यैव श्रैष्ठ्यं किं न स्यादित्यर्थः॥ तस्यैवोपास्यतया श्रैष्ठ्यमाशंक्य वागादीनामन्यतमस्योपास्यत्वमपा स्य प्राणस्यैवोपास्यत्वं महत्त्वाभावादित्याक्षेपांतरमाह॥ कथं चेति॥ प्राणस्य श्रेष्ठत्वं ज्येष्ठत्वमित्यादिगुणविधानार्थमेव तावत्प्रथममारभ्यते ॥ यो ह वै ज्येष्ठं चेत्याद्यं चोद्यं परिहरति॥ प्रथममिति॥ प्राणस्यैवोपासनं न वागादीनामित्येतदनंतरमारभ्यते अथ ह प्राण उच्चिक्रमिषन्नित्यादि

कोसौज्येष्ठगुणोवेदितव्यइत्यतआह॥फलेनेतिकुतोवागादिभ्योज्येष्ठत्वंप्राणस्यप्रतीतंसर्वैर्हिवागादयःसप्राणाःसहैवगर्भस्थेस्वतोवृत्तिभागिनो
भवंतितत्राह॥गर्भस्थेहीति॥तत्रगर्भेविवृद्धिदर्शनंप्रमाणयति॥यश्चेति॥कदातर्हिवागादीनांवृत्तिलाभस्तत्राह॥चक्षुरादीति॥प्राणस्यज्येष्ठत्वंप्र
तिपादितंनिगमयति॥इतिप्राणइति॥गुणद्वयमुपास्यत्वायदर्शितंनिगमयति॥अतइति॥तदार्थत्वेनैवगुणांतरंदर्शयति॥योहवाइति॥वसुमत्त

रभ्यधिकंवेदसज्येष्ठश्चहवैश्रेष्ठश्चभवति॥फलेनपुरुषंप्रलोभ्याभिमुखीकृत्याहप्राणोवावज्येष्ठश्चवयसावागादिभ्योग
र्भस्थेपिपुरुषेप्राणस्यवृत्तिर्वागादिभ्यःपूर्वंलब्धात्मिकाभवति॥यथागर्भोविवर्धतेचक्षुरादिस्थानावयवनिष्पत्तौसत्यांप
श्चाद्वागादीनांवृत्तिलाभइतिप्राणोज्येष्ठोवयसाभवति॥श्रेष्ठत्वंतुप्रतिपादयिष्यतिसुहयइत्यादिनिदर्शनेनातःप्राणएवज्ये
ष्ठश्चश्रेष्ठश्चास्मिन्कार्यकरणसंघाते॥योहवैवसिष्ठंवस्तृतममाच्छादयितृतमंवसुमत्तमंवायोवेदसतथैववसिष्ठोहभव

योहवैवसिष्ठंवेदवसिष्ठोहस्वानांभवतिवाग्वाववसिष्ठोयोहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिꣳश्चलोकेमु
ष्मिꣳश्चचक्षुर्वावप्रतिष्ठायोहवैसंपदंवेदसꣳहास्मैकामाःपद्यंतेदैवाश्चमानुषाश्चश्रोत्रंवावसंपद्योहवाआयतनं

तिस्वानांज्ञातीनांकस्तर्हिवसिष्ठइत्याहवाग्वाववसिष्ठोवाग्मिनोहिपुरुषावसंतिअभिभवंत्यन्यान्वसुमत्तमाश्चातोहवा
ग्वसिष्ठोयोहवैप्रतिष्ठांवेदसचास्मिन्लोकेमुष्मिंश्चपरेप्रतितिष्ठतिहतर्हिकाप्रतिष्ठेत्याहचक्षुर्वावप्रतिष्ठाचक्षुषाहिपश्य
न्समेचदुर्गेचप्रतितिष्ठतियस्मादतःप्रतिष्ठाचक्षुर्योहवैसंपदंवेदतस्माअस्मैदैवाश्चमानुषाश्चकामाःसंपद्यंतेहतर्हिका
संपदित्याहश्रोत्रंवावसंपद्यस्मा ॥मंधनवत्वादन्येषांनिवासकारणमित्यर्थः॥तथैवेत्युपासनानुसारेणेतियावत्वसिष्ठोहभवतीतिवा
सयितावेत्यर्थः॥वाचोवसिष्ठत्वंसमर्थयते॥वाग्मिनोहीति॥वसुमत्तमाश्चेतिनान्यान्निवासयंतीतिशेषः॥गुणांतरमाध्यानायोपदिशति॥योहेति॥
प्रतिष्ठात्वंचक्षुषोविशदयति॥चक्षुषाहीति॥गुणांतरमाह॥योहवाइति॥दैवाःकामाःस्वर्गादयोवामानुषाःपश्वादयःश्रोत्रस्यसंपत्त्वंसाधयति॥य

द्वत्येवं यस्मात्तस्मादिति योजना॥ संप्रतिगुणांतरमाह॥ यो हेति॥ कथं पुनरायतनत्वं मनसः सिद्धमित्यत आह॥ इन्द्रियोपहृतानामिति॥ यथोक्ता
गुणा मुख्यप्राणगामिनो न प्रत्येकं वागादिषु भवंतीति वक्ष्यमाणस्याख्यायिकां प्रणयति॥ अथेति॥ कंचिद्विराजं कश्यपादीनामन्यतमं वेत्यर्थः॥ शरी

श्रोत्रेण वेदा गृह्यंते तदर्थविज्ञानं च ततः कर्माणि क्रियन्ते ततः कामसंपदित्येवं कामसंपद्धेतुत्वात् श्रोत्रं वाव संपद्यो ह वा
आयतनं वेद आयतनं ह स्वानां भवति आश्रयो भवतीत्यर्थः॥ किं तदायतनमित्याह मनो ह वा आयतनं इन्द्रियोपहृतानां वि
षयाणां भोक्त्रर्थानां प्रत्ययरूपाणां मन आयतनमाश्रयोऽतो मनो ह वा आयतनमित्युक्तं॥ अथ ह प्राणा एवं यथोक्तगुणाः
संतोऽहंश्रेयस्यहंश्रेयानस्म्यहंश्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिर उक्तवंतस्ते ह ते हैवं विवदमाना आ
त्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कंचिदेत्योचुरुक्तवंतो हे भगवन्को नोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्ये

वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनमऽथ ह प्राणा अहꣳश्रेयसि व्यूदिरे हꣳश्रेयानस्म्यहꣳश्रे
यानस्मीति ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतर
मिव दृश्येत स वः श्रेष्ठ इति सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा

वं पृष्टवंतस्तान्पितोवाच ह यस्मिन्वो युष्माकं मध्ये उत्क्रांते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रांतप्राणं ततो
ऽपि पापिष्ठतरमिवातिशयेन दृश्येत कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत्काक्वा तद्दुःखं परिजिहीर्षु
स्तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्रामोत्क्रांतवती सा चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्ये
तरान्प्राणानुवाच कथं केन प्रकारेणाशकत शक्तवंतो यूयं मदृते मां

९ रस्य पापिष्ठत्वं पापकार्यप्रधानत्वं इवशब्दोऽवधारणार्थः॥ उ
क्तमेवार्थं संक्षिप्याह॥ कुणपमिति॥ त्यक्तप्राणं शवरूपमिति यावत् ननु प्रजापतिः सर्वज्ञो मुख्यमेव प्राणं किमिति श्रेष्ठं नाभिवदति तत्राह॥

वागादीनां दुःखं तत्परिहर्तुमिच्छन्प्रजापतिः स्वरभङ्गोपायविशेषेण श्रेष्ठमुक्तवानस्फुटमित्यर्थः॥ अन्यादित्यस्य विषयमाह॥ चक्षुरिति॥ बा
लानामपि विहितं तद्विरहितत्वाविशेषात्कथममनस्त्वमिति विशेषणमत आह॥ अरूढेति॥ परीक्षितेषु श्रेष्ठतोऽरहितेषु निरूप्यान श्रितेषु इति या व
त्॥ पदनशीलाः पादाः तेषां संहतिः पड्वीशस्तस्यास्थानि यामकाः शङ्कवो वर्णविकारश्छान्दसः॥ नान्यथाक्तानश्वो युगपदुत्पाटयेदुद्युतेति॥ ह

विना जीवितुं धारयितुमात्मानमिति तेहोचुर्यथा कला इत्यादि कलामूका यथा लोकेऽवदन्तो वाचा जीवन्ति॥ कथं प्रा
णन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा सर्वकरणचेष्टां कुर्वन्त इत्यर्थः॥ एवं वयमजीविष्मेत्यर्थः॥
आत्मनोऽश्रेष्ठतां प्राणेषु बुध्वा प्रविवेश ह वाक् पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः॥ समानमन्यत्॥ चक्षुर्होच्चक्रामेत्यादि श्रो
त्रं होच्चक्राम मनो होच्चक्रामेत्यादि यथा बाला अमनसोऽप्ररूढमनस इत्यर्थः॥ एवं परीक्षितेषु वागादिषु अथानन्तरं ह स मुख्यः

कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक्॥ च
क्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्रा
णेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्य

प्राण उच्चिक्रमिषन्नुत्क्रान्तुमिच्छन् किमकरोदित्युच्यते॥ यथा लोके सुहयः शोभनोऽश्वः॥ पड्वीशशङ्कून्पादबन्धनकी
लान्परीक्षणायारूढेन कशयाहतः सन्संखिदेत्समुत्खनेत्समुत्पाटयेदेवमितरान्वागादीन्प्राणान्समखिदत्समुद्धृ
तवान्॥ ते प्राणाः संचालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमाना अभिसमेत्य मुख्यं प्राणं तमूचुः॥ हे भगवन्नेधि
भव नः स्वामी यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति॥ अथ हैनं वागादयः ५ ह्वान्तमुक्त्वा रञ्जीतिकमाह॥
एवमिति॥ मयि श्रेष्ठत्वधीर्युष्माकमस्तीति कथं ज्ञातुं शक्यमित्याशङ्क्याह॥ अथेति॥ वचनं प्रश्नपूर्वकं प्रकटयति॥

छां·भा· ३

कथमित्यादिना ॥ क्रियाविशेषणत्वमेव विशदयति ॥ यद्वसिष्ठत्वेति ॥ वसिष्ठत्वेन गुणेनाहं गुणवानस्मीति यत्तत्त्वमेवेति योजना ॥ अनंतर वाक्यमादाय व्याचष्टे त्वमित्यादिना ॥ तद्वसिष्ठ इति समस्तं पदमिति गृहीत्वा व्याख्यायपक्षांतरमाह ॥ अथवेति ॥ यच्छब्दवदित्यपरार्थः ॥ अहं वसिष्ठत्वगुणोस्मीति यत्त्वमेव वसिष्ठत्वगुणोसीति कथमिदानीमुच्यते अन्यथा हि पूर्वमभिधानं तवासीदित्याशंक्याह ॥ त्वत्कृत इति ॥

अ· ५

प्राणस्य श्रेष्ठत्वं कार्येणापादयन्न आह बलिमिव हरंतो राज्ञो विशः कथं वा कास्तावद्वाचयदहं वसिष्ठोस्मि यदिति क्रिया विशेषणं यद्वसिष्ठत्वगुणास्मीत्यर्थः ॥ त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोसि न तत्कृतस्त्वमित्यर्थः ॥ अथवा तच्छब्दोपि क्रियाविशेषणमेव त्वं तत्स्थलदीयो सौ वसिष्ठगुणोऽज्ञानान्ममेति मयाभिमत इत्येतत्तथोत्तरेषु योज्यं चक्षुः

पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाबधिरा अशृण्वंतः प्राणंतः प्राणेन वदंतो वाचा पश्यंतश्चक्षुषा ध्यायंतो मनसैवमिति प्रविवेश ह श्रोत्रं मनोहोच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते म ।
ज्जीवितुमिति यथा बाला अमनसः प्राणंतः प्राणेन वदंतो वाचा पश्यंतश्चक्षुषा शृण्वंतः श्रोत्रेणैवमिति प्रविवेश ह मनो ॥ अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशंकून्संखिदेदेवमितरान्प्राणान्समखिदत्तं हाभि
समेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोसि मोत्क्रमीरिति ॥ अथ हैनं वागुवाच यदहं वसिष्ठोस्मि त्वं तद्वसिष्ठोसीत्य

श्रोत्रं मनः संपदिति प्रतिष्ठेति इदं वचो युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्नवै लोके वाचो न चक्षूंषि न श्रोत्राणि ।
न मनांसीति वागादीनि करणान्याचक्षते लौकिका आगमज्ञा वा किं तर्हि प्राणा इत्येवाचक्षते कथयंति ॥ ॥ ॥

वाचि दर्शितं न्यायं चक्षुरादावतिदिशति ॥ तथेति ॥ वागादिवचनादुक्त्या यमाणाधीनता वागादेः श्रुतिरेव कथयतीत्युत्तरस्य न वैवाच इत्यादे ।
स्तात्पर्यमाह ॥ श्रुतेरिति ॥ तदेव वचसोपस्कारं व्याकरोति ॥ युक्तमित्यादिना ॥ यदि सर्वाण्येव करणानि वाक्तंत्राणि स्युस्तर्हि वाच इत्येवतानि ब्रूयु

राम ३

वदेयुर्नचैवंवदंतिप्राणादृतितानिकथयंतितस्मात्प्राणपारतंत्र्यंकरणानांसिद्धमित्यर्थः॥ वागादिभिरुक्तंतद्वसिष्ठोसीत्यादिप्राणस्यैव
यथोक्तगुणवतोऽस्यपत्वंप्रकरणार्थः॥ साक्षादुपसंहाराद्दर्शनादुपसंजिहीर्षतीत्युक्तं॥ आख्यायिकायायथाश्रुतमर्थमाक्षिपति॥ नन्विति॥ य
थापुरुषाश्चेतनावंतोविवदमानाअस्पर्धंतेतथावागादयोचेतनाःस्वकीयश्रेष्ठत्वसिध्यर्थंविप्रतिपन्नामिथःस्पर्धंतइतिनिवत्युक्तंअचेतनेषु
स्पर्धादेरदर्शनादित्यर्थः॥ किंचवाग्व्यतिरिक्तानामन्योन्यंवचनमेवानुचितंवचनस्यवाग्व्यापारत्वादित्याह॥ नहीति॥ किंचवागादीनांदेहात्

यस्मात्प्राणोह्येवैतानिसर्वाणिवागादीनिकरणजातानिभवन्त्यतोमुख्यंप्राणंप्रत्यनुरूपमेववागादिभिरुक्तमितिप्रकरणार्थ
मुपसंजिहीर्षति॥ ननुकथमिदंयुक्तंचेतनावत्तद्वत्पुरुषाअहंश्रेष्ठतायैविवदंतोन्योन्यंस्पर्धेयुरिति॥ नहिचक्षुरादीनांवाचं
प्रत्याख्यायप्रत्येकंवदनंसंभवति॥ तथापगमोदेहात्पुनःप्रवेशोब्रह्मगमनंप्राणस्तुतिश्चोपपद्यतेतत्राग्न्यादिचेतनावद्देवता

थहैनंचक्षुरुवाचयदहंप्रतिष्ठास्मित्वंतत्प्रतिष्ठासीत्यथहैनंश्रोत्रमुवाचयदहंसंपदस्मित्वंतत्संपदसीत्य
थहैनंमनउवाचयदहमायतनमस्मित्वंतदायतनमसीतिनवैवाचोनचक्षूंषिनश्रोत्राणिनमनांसीत्याच-
क्षतेप्राणाइत्येवाचक्षतेप्राणोह्येवैतानिसर्वाणिभवति॥ १॥ (धिष्ठितत्वाद्वागादीनांचेतनावत्त्वंतावत्सिद्धमागमतः॥
तार्किकसमयविरोधइतिचेद्देहेएकस्मिन्ननेकचेतनावत्त्वेनेश्वरस्यनिमित्तकारणत्वाभ्युपगमात्) सर्पणाद्ययुक्तमचेतनत्वादि

त्याह॥ तथेति॥ वाशब्दोनहीत्यस्यानुकर्षणार्थःअग्न्यादयश्चेतनावत्योदेवतास्ताभिरधिष्ठितत्वात्तादात्म्याभिप्रायेणवागादीनांचेतनावत्त्वसं
भवाद्वदनादिव्यवहारःसंभवतीत्यग्निर्वाग्भूत्वामुखंप्राविशदित्यादिश्रुतिमनुसृत्योत्तरमाह॥ तत्रेति॥ एकस्मिन्देहेअनेकचेतनावतांप्रसङ्ग
विरुद्धानेकाभिप्रायानुविधायित्वेनदेहस्योन्मथनप्रसंगादक्रियत्वप्रसंगाद्वानानेकचेतनाधिष्ठितत्वमेकस्यदेहस्यसंभवतीतिशंकते॥
तार्किकेति॥ किमेकशरीरमनेकचेतनाधिष्ठितंनभवतिकिंवातैर्निर्णीतकर्तृभोक्त्रधिष्ठितमितिविकल्प्याद्यंदूषयति॥ नेति॥ २॥ २॥

शां·भा ४ | अ· १

अस्ति हि परमते शरीरस्य जीवाधिष्ठितस्येश्वराधिष्ठितत्वं तथा चैकशरीरमनेकचेतनाधिष्ठितं न भवतीति नास्ति सेश्वरवादिनां शंके। त्यर्थः संग्रहवाक्यं विवृणोति॥ येतावदिति॥ अचेतनानां चेतनाधिष्ठितानामेव प्रवृत्तिरित्यत्र दृष्टांतमाह॥ रथादिवदिति॥ द्वितीयं प्रत्याह ॥ नचेति॥ कार्यकरणानामधिष्ठातृदेवतानां नहि तत्कार्यकरणानां किमधिष्ठातृदेवतांतरमिति पृच्छति॥ किन्तर्हीति॥ देवताकार्यकरणा नामधिष्ठातृदेवतांतरमिष्टं चेदनवस्था स्यादिति मन्वानं प्रत्याह॥ कार्यकरणवतीनामिति॥ शाकल्यब्राह्मणमनुसृत्याह॥ प्राणेति॥ नन्व भूयस्यो देवताः कथं तासां प्राणलक्षणैकदेवताप्रभेदत्वमत आह॥ अध्यात्माधिभूताधिदैवानां भेदकोटिभिर्विकल्पो यासामिति विग्रहः॥

ये तावदीश्वरमभ्युपगच्छन्ति तान्प्रति किं कार्यकरणानामाध्यात्मिकानां बाह्यानां च पृथिव्यादीनामीश्वराधिष्ठितानामेव नियमेन प्रवृत्तिमिच्छन्ति रथादिवत् न चास्माभिरस्माद्याश्चेतनावत्यो देवता अध्यात्मं भोक्त्र्योऽभ्युपगम्यन्ते॥ किं तर्हि कार्यकरणवतीनां हि तासां प्राणैकदेवताभेदानामध्यात्माधिभूताधिदैवभेदकोटिविकल्पानामव्याकृतमात्रेण। निर्यन्तेश्वरोऽभ्युपगम्यते॥ स ह्यकरणोऽपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिमंत्रवर्णात्॥ हिरण्यगर्भं पश्यत जायमानं हिरण्यगर्भं जनयामास पूर्वमित्यादि च श्वेताश्वतरीयाः पठन्ति॥ भोक्ता कर्मफलसंबंधी देहे तद्विलक्षणो जीव इति वक्ष्यामः॥ वागादीनां चेह संवादः कल्पितो

१ नियंतृत्वमप्रयुक्तव्यापारवत्त्वं वारयितुं विशिनष्टि॥ अव्याकृतमात्रेणेति॥ अथेश्वरस्यापि नियंतृत्वात्कार्यकरणवत्त्वं देवतानामिव स्यादिति चेन्नेत्याह॥ सहीति॥ अकरणत्वमकार्यत्वस्याप्युपलक्षणं तत्र श्रुतिं प्रमाणयति॥ अपाणीति॥ आदिपदेन च न तस्य कार्यं करणं च विद्यत इत्यादिमंत्रवर्णो गृहीतः॥ सूत्रात्मा हिरण्यगर्भः सा चैका समष्टिरूपा देवता तद्वयस्याभेदानां देवतानामीश्वरो नियंतेत्युक्तं॥ तत्र प्रमाणमाह॥ हिरण्यगर्भमिति॥ आदिशब्देन हिरण्यगर्भः समवर्तताग्र इत्यादि गृह्यते॥ देवतानामीश्वरस्य चास्मिन्देहे भोक्तृत्वाभावे कस्य भोक्तृत्वमित्यत आह॥ भोक्तेति॥ तद्विलक्षणो देवतेश्वराभ्यां व्यावृत्त इति यावत्॥ वागादिशब्दवाच्याश्चेतनावत्यो देवता [illegible] आख्यायिकायाः स्वार्थनिरस्त्यर्थमुक्तमिदानीं तस्यास्तात्पर्यमाह॥ वागादीनां चेति॥

राम ४

विदुष इति ॥ यथोक्तं कस्य नामेदृष्टं तेन स्पष्टयति ॥ यथेत्यादिना तेनोक्ता इत्युक्तमेव व्यनक्ति ॥ एकैकश्येनेति ॥ विदुष इत्यादिनोक्तं प्रयो
जनं प्रकटयति ॥ कथं नामेति ॥ विद्वान् प्राणश्रेष्ठतां नाम प्रतिपद्येतेति संबन्धः ॥ प्रतिपत्तिप्रकारं संक्षिपति ॥ वागादीनामिति ॥ फलवतीकल्प
नेति शेषः ॥ दृष्टेऽर्थे श्रुतिमन्त्रग्राहकत्वेन दर्शयति ॥ तथा चेति ॥ १ ॥ वागादीनां स्वामी श्रेष्ठत्वादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यासु ॥

विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्धारणार्थेयमाख्यायिका यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कंचिद्गुण
विशेषाभिज्ञं पृच्छन्ति कोनः श्रेष्ठो गुणैरिति तेनोक्ता एकैकश्येनाऽऽदः कार्यं साधयितुमुद्यच्छत येनाऽऽदः कार्यं साध्यते स वः श्रे
ष्ठ इत्युक्तास्तथैवोद्यच्छन्त आत्मनोऽन्यस्य वा श्रेष्ठतां निर्धारयन्ति ॥ तथेमं संव्यवहारं वागादिषु कल्पितवती श्रुतिः ॥ कथं
नाम विद्वान्वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न तु प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्येतेति ॥ तथा च श्रुतिः कौषीत

स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमाश्वभ्य आशकुनिभ्य इति

कानां जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीव
ति मनोऽपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्याद्या ॥ १ ॥ स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यती
ति ॥ मुख्यं प्राणं प्रष्टारमिव कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह यदिदं लोकेऽन्नजातं प्रसिद्धमाश्वभ्यः श्व
भिः सहाशकुनिभ्यः सह शकुनिभिः सर्वप्राणिनां यदन्नं तत्तवान्नमिति होचुर्वागादय इति प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्व-
स्यान्नस्येत्येवं प्रति

पत्तिदर्शनांगभूतान्नवासोदृष्टिविधानार्थं प्रक्रमे प्रथममन्नदृष्टिं विधातुं प्रसंगं प्रकुरुते ॥ स होवाचेति ॥ मु
ख्यस्य प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं काल्पनिकमित्याह ॥ मुख्यमिति ॥ यदिदमित्युक्तमेव चेयात्तद्वाक्यार्थकल्पनार्थं यदन्नमित्य
त्रानूद्यते ॥ तद्वा एतदित्यादिनोत्तरवाक्यस्य पूर्ववाक्यादर्थभेदाभावमाशंक्याह ॥ प्राणस्येति ॥ प्राणशब्दं विहायाऽनःशब्दप्रयोगे तात्पर्यं ॥

छां॰भा॰ ५

अ॰ ५

सर्वप्रकारेति॥अनचेष्टायामिति धातुजस्यानशब्दस्योपादानं सर्वप्रकारचेष्टायाः प्राणस्य व्याप्तिगुणप्रदर्शनार्थं तथान्वयः कोपि द्रष्टृ ति
श्रावयति श्रावयति वा सः सर्वोपि प्राण एवेति युक्तं प्राणस्यानद् इति नामेत्यर्थः॥प्रत्यक्षं पूर्वोक्तधातुजन्मनामेति यावत् उक्तमेवार्थं समर्थयु
ते॥प्रादीति॥अनशब्दस्येति शेषः॥न प्राणस्य सर्वचेष्टाप्तिरित्येवकारार्थः॥तथाच प्राणादिशब्दोपादाने विशेषव्याप्तिरेवेति स्थिते सती
त्यर्थः॥अनदिति॥प्रत्यक्षमिदं नाम सर्वान्नानामत्तुर्नामग्रहणमिति संबन्धः॥तदेव व्याचष्टे॥सर्वान्नानामिति॥ ननश्च प्राणशब्दस्य प्राणवि

रव्यापिकारूपाद्यावृत्यस्वेन श्रुतिरूपेणाह न ते ह वा एतद्यत्किंचिल्लोके प्राणिभिरन्नमद्यते अनस्य प्राणस्य तदन्नं प्राणेनैव तद
द्यत इत्यर्थः॥सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम प्रादुपसर्गपूर्वत्वे हि विशेषगतिरेवस्या
त्तथाच सर्वान्नानामत्तुर्नामग्रहणमिति तदिदं प्रत्यक्षं नाम अनद् इति सर्वान्नानामत्तुः साक्षादभिधानं न ह वा एवं विदि स्वं यत्किंचा।

होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किंचनानन्नं भवतीति स होवाच किं मे वासो।

णविदि प्राणोहमस्मि सर्वभूतस्थः॥सर्वान्नानामत्तेति तस्मिन्नेवंविदि ह वै किंचन किंचिदपि प्राणिभिरद्यं सर्वैरन्नम
नाद्यं न भवति सर्वमेवं विदुषोन्नं भवतीत्यर्थः प्राणभूतत्वाद्विदुषः प्राणाद्वा एष उदेति प्राणेस्तमेतीत्युपक्रम्यैवं विदो ह वा
उदेति सूर्य एवं विद्यस्तमेतीति श्रुत्यन्तरात्स होवाच पुनः प्राणः पूर्ववदेव कल्पना किं मे वासो भविष्यतीत्यापद्मतिहोचुर्वाग
दयो यस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति॥इदं सर्वमन्नं चेत्तद्वि

दुषो भक्ष्याभक्ष्यविभागासिद्धेस्तद्विषयं शास्त्रं विरुध्येतेत्याशंक्याध्यात्मिकं रूपं हित्वाधिदैविकेन रूपेण तस्य सर्वान्नत्वे विभागशास्त्रं आ
ध्यात्मिकपरिच्छेदविषयत्वेनाविरुद्धमित्याह॥प्राणभूतत्वादिति॥प्राणभूतो विद्वानित्यत्र श्रुत्यन्तरं संवादयति॥प्राणादिति॥प्राणविद्यागतत्वे
नान्नदृष्टिरुपदिष्टा संप्रतितदंगत्वेन वासोदृष्टिं प्रस्तौति॥स होवाचेति॥अत्रापि प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं च कल्पितमेवेत्याह

वासोदृष्टिफलमाचष्टे॥लंभुकइति॥अनग्नोहभवतीत्यस्यपौनरुक्त्यंआशंक्यार्थविशेषमाह॥वासइति॥आचमनानंतरंप्राणविदोवि।
धीयतेएवंविदशिष्यन्नाचामेद्धितिश्रुतेरित्याशंक्याह॥भोक्ष्यमाणस्येति॥आदिपदेनप्रश्नप्रतिवचनेगृह्येते॥सर्वप्राणिभोग्यमन्नंतस्यान्न।
मितिदृष्टिवदाचमनीयास्वप्सुतस्यविधीयतेवासोदृष्टिरित्युक्तव्यतिरेकद्वाराविवृणोति॥यदीति॥नारथ्येनानग्नतार्थत्वेनेतियावदथपू

किंअद्भिर्वासःस्थानीयाभिःपुरस्ताद्भोजनात्प्रथमम्प्सुपरिष्टाच्चभोजनादूर्ध्वंचपरिदधतिपरिधानंकुर्वंतिमुख्यस्यप्राण
स्यलंभुकोलंभनशीलोवासोहभवतिवासंसोलब्धैवभवतीत्यर्थः॥अनग्नोभवति॥वासोलंभुकत्वेनार्थसिद्धेर्वानग्न
तादृत्यनग्नोहभवतीत्युत्तरीयवान्भवतीत्येतत्॥भोक्ष्यमाणस्यभुक्तवतश्चयदाचमनंतदुभयमर्थविज्ञानंतस्मिन्प्राणस्य
वासइतिदर्शनमात्रमिहविधीयतेअद्भिःपरिदधातीतिनाचमनांतरं॥यथालौकिकैःप्राणिभिरद्यमानमन्नंप्राणस्येति।

भविष्यतीत्यापद्यतिहोवुस्तस्माद्वाएनदशिष्यंतःपुरस्ताच्चोपरिष्टाच्चाद्भिःपरिदधतिलंभुकोहवासोभवत्यन
दर्शनमात्रंतद्धर्किंमेऽन्नंकिंमेवासइत्यादिप्रश्नप्रतिवचनयोस्तुल्यत्वाद्यथाचमनमपूर्वंतादर्थ्येन ग्नोहभवति॥
क्रियेतनतदाकस्यचिदन्नमपिमाणस्येतिभक्ष्यत्वेनविहितस्यात्तुल्ययोर्विज्ञानार्थयोःप्रश्नप्रतिवचनयोःप्रकरणस्यविज्ञा
नार्थत्वादर्द्धजरतीयन्यायोनयुक्तःकल्पयितुं॥यत्तुप्रसिद्धमाचमनंप्रायत्यार्थंमाणस्यानग्नतार्थंचनभवतीत्युच्यतेनतत्
थावयमाचमनेमुभयार्थंब्रूमः॥किंतर्हि प्रायत्यार्थांच॥वेमन्नदृष्टिरेवविधीयतेसर्वान्नभक्षणस्यप्रमाणस्यविरुद्धत्वादिहतुअ
पूर्वमाचमनमविरोधाद्विधीयतामित्याशंक्याह॥तुल्ययोरिति॥एकस्याचमनस्यपुर्व्यर्थत्वमनग्नतार्थत्वंचक्रमशक्यंविरोधादित्या
शंक्याह॥यत्त्विति॥विरोधोयथास्यात्तथेतिस्यावेतर्हिकीदृगाचमनंविवक्षितमित्याह॥किंतर्हीति॥प्रयतस्यभावःप्रायत्यंतदर्थोयाचम
नक्रियातत्साधनभूतास्वप्सुवासःसंकल्पनंक्रियांतरमत्रविधित्सितमित्याह॥प्रायत्येति क्रियाभेदफलितमाह॥ ७ ॥ २ ॥ ७ ॥

छां॰भा॰ ६६ तत्रेति॥ अन्यार्थोऽस्त्वप्सु अन्यार्थत्वविधाने प्रमाणविरोधाद्विधियोगेन वासोऽर्थमाचमनान्तरमेव विधेयं तत्र चानग्नतार्थत्वचिंतनमु
चितमिति शंकार्थः॥ वासोऽर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः प्रसंगात्प्रसिद्धाचमनसाधनभूतास्वप्सु
वासोदृष्टिपरमेव वाक्यमित्युत्तरमाह॥ नेत्यादिना॥ वासोऽर्थत्वे अन्यार्थत्वं दृष्ट्यर्थत्वं द्युक्तप्रमाणस्यैकैकस्य वाक्यस्याप्रमाणत्व अ॰ ५

मनसा धनुभूता आपः प्राणस्य वास इति दर्शनं चोद्यत इति ब्रूमः॥ तत्राचमनस्योभयार्थत्वप्रसंगदोषचोदनानु
पपन्ना वासोऽर्थ एवाचमने तद्दर्शनं स्यादिति चेन्न वासोज्ञानार्थवाक्ये वासोऽर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्व
दृष्टिविधाने च वाक्यभेदः आचमनार्थत्वमन्यार्थत्वं चेति प्रमाणाभावात्॥ तदेतत्प्राणदर्शनं स्तूयते॥ कथं तद्धैतत्प्राण
दर्शनं सत्यकामो जाबालो गोश्रुतये नाम्ने वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः॥ तस्मै गोश्रुत्याख्यायोक्त्वोवाचा

तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्ने (वास्मिञ्छाखाः

न्यदपि वक्ष्यमाणं वचः किं तदुवाचेत्याह॥ यद्यपि शुष्काय स्थाणवे एतद्दर्शनं ब्रूयात्॥ प्राणविज्जा
येरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि किमु जीवते पुरुषाय ब्रूयादिति॥ यथोक्तप्रा
णदर्शनविदः इदं मन्थाख्यं कर्मारभ्यते॥ अथानन्तरं यदि महन्महत्त्वं जिगमिषेद्गंतुमिच्छेन्महत्त्वं प्राप्तुं यदि कामयेदि
त्यर्थः तस्येदं कर्म विधीयते॥ महत्त्वे हि सति ((प्रसंगादित्यादि यावत् तद्धैतदित्यादिवाक्यं न विधानार्थं नापि फलवचनं तथा च व्यर्थमि
त्याशंक्याह॥ तद्धैतदिति॥ स्तुतिमेव प्रपञ्चपूर्वकं विवृणोति॥ कथमिति॥ जीवते पुरुषाय प्राणविद्यावते एतद्दर्शनं ब्रूयादस्मिन्महाफलं भवती
ति किमु वक्तव्यमिति भाजनां गोदोहनवदधिकृताधिकारमिदं कर्म प्राणविदोऽस्मिन्नधिकारोऽस्तीत्याह॥ यथोक्तेति॥ अनंतरं प्राणविद्यानि
ष्पत्तेरिति शेषः॥ वाक्यशेषं पूरयति॥ तस्येति॥ महत्त्वद्वारा विषयोपभोगकामुकस्य कर्म विधायि शास्त्रं श्रेयो नादिशास्त्रवदनर्थफलमवेत्य गम ६

नस्येति ॥ प्रकृतमंथारंभकर्मोक्तिः कालादीनामादिशब्दो द्रव्यादिसंग्रहार्थः ॥ देशं दीक्षायां भवं मौन्याभ्यंजनादि सर्वमेवायमनुतिष्ठति प्रकृ-
तिधर्मो हि विकृतावनुवर्तते प्रकृतिवद्विकृतिः कर्तव्येति न्यायात् न चैवं कर्मैकस्य विहितिरितो यथोक्तधर्मवत्त्वमेवात्र विवक्षितमित्यर्थः ॥ दी-
क्षितेत्यनेन विवक्षितं धर्मांतरमाह ॥ उपसदिति ॥ उपसदो नामेष्टयः प्रवर्ग्यो हस्तुमसिद्धाः तासु व्रतं पयोमात्रभक्षणं तदुपेतो भूत्वा मंथं

श्रीकृपनमंते श्रीमतो हरार्थे मासंधनं ॥ ततः कर्मानुष्ठानं ॥ ततश्च देवयानं पितृयाणं वा पंथानं प्रतिपत्स्यत इत्येतत्प्रयोजन
मुररीकृत्य महत्वमेप्सा हिंदं कर्म न विषयोपभोगकामस्य ॥ तस्यायं कालादि विधिरुच्यते ॥ अमावास्यायां दीक्षित्वा दीक्षि
तव्रत भूमिशयनादिनियमैस्तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादि धर्मवान् भूत्वेत्यर्थः ॥ न पुनर्दीक्षणीयमेव कर्मजातं सर्वमुपाद-

परोहेत्यः पलाशानीत्यथ यद्भिमहज्जिगमिषेद मावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मंथं दधिम
धुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेद्वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा
मंथे संपातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेत् संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा ॥

नेः तद्विकारत्वान्मंथारंभस्य कर्मणः उपसद्व्रती निश्चयं तत्र यान्ययोमात्रभक्षणे च तद्विकारणं तप उपादत्ते पौर्णमास्यां रा-
त्रौ कर्मारभेत सर्वौषधस्य ग्राम्याऽरण्यानामौषधीनां यावच्छक्त्याऽल्पमल्पमुपादाय तद्वितुषीकृत्यामममेव पिष्टं दधिमधुनो
रौदुंबरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यंतरात् प्रक्षिप्योपमथ्याग्नेः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य [illegible]आ

संपातस्त्रुवोलीनं वाजसनेयके समानप्रकरणे श्रवणादिति यावत् पिष्टं कृत्वा न त्वामम पक्वमेव दधिमधुनोः संबंधं पात्रे प्रक्षिप्येति संबंधः
॥ औदुंबरत्वे नियमः पात्रस्याकारे तु विकल्पः कथमश्रुतं पात्रमत्र विकल्पेनेत्यत आह ॥ श्रुत्यंतरादिति ॥ औदुंबरे कंसे चमसे वेति वाजसनेयश्रु
तौ पात्रस्य वैशाखाप्रत्ययन्यायेनापेक्षितं पात्रमत्र गृहीतमित्यर्थः आवसथ्यसंबंधी लौकिकोऽग्निरावसथ्याविवक्षितायस्मिन्नौपासनाख्यक

छां॰ भा॰ ७

आवापस्थानमाहुतिप्रक्षेपप्रदेशो गृह्योक्तः ॥ वसिष्ठाय स्वाहेत्यादिवाक्यं पूर्ववाक्येन तुल्यार्थमित्याह ॥ समानमिति ॥ तुल्यत्वमेव स्पष्टयति ॥ वसिष्ठायेति ॥ स्वाहेति मंत्रमनुच्चार्य हुत्वेति संबंधः तथैव प्रथमहोमानंतरमित्यर्थः ॥ आहुत्यानंतर्यमथशब्दार्थः ॥ भवतु प्राणस्येदं नाम मंथस्य तु कथं मंत्रार्थत्वमित्याशंक्याह ॥ अन्नं नहीति ॥ प्रतिज्ञातेऽर्थे प्रश्नपूर्वकं हेतुमाह ॥ कुत इति ॥ अतश्चामो नामासीति पूर्वेण ॥

अ॰ ५

हुत्वा स्रुवे संलग्नं मंथे संपातमवनयेत्संस्रवमधःपातयेत्समानमन्यत् ॥ वसिष्ठाय प्रतिष्ठायै संपदे आयतनाय स्वाहेति ॥ प्रत्येकं तथैव संपातमवनयेद्धुत्वाथ प्रतिसृप्याग्नेरीषदपसृत्याञ्जलौ मंथमाधाय जपतीमं मंत्रम् ॥ अमो नामास्यमा हि ते अम इति प्राणस्य नाम ॥ अन्नेन हि प्राणः प्राणितीति देहे ह्यतो मंथद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयतेऽमो नामासीति ॥ कुतो यतो मा सह हि यस्मात्तेतव प्राणभूतस्य सर्वं समस्तं जगदिदमतोऽमो नामासीत्यर्थः ॥ स हि प्राणभूतो मंथो ज्येष्ठः श्रेष्ठश्चात

मंथे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेदथ प्रतिसृप्याञ्जलौ मंथमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदं स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयत्वहमेवेदं सर्वमसानीत्यथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचा

((मति श्रेष्ठः

एवं च राजाऽधिपतिश्चाधिष्ठाय पालयिता सर्वस्य स मा मामपि मंथः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनो गमयत्वहमेवेदं सर्वं जगदसानि भवानि प्राणवदितिशब्दो मंत्रसमाप्त्यर्थः अथानंतरं खल्वेतया वक्ष्यमाणयर्चा पच्छः पादशः आचामति भक्षयति ॥ मंत्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति ॥ तद्भोजनं सवितुः सर्वस्य प्रसवितुः प्राणमादित्यं चैकीकृ

संबंधः हेतुं व्याचष्टे ॥ यस्मादिति ॥ अनंतरं जपकर्मणः सकाशादिति शेषः ॥ तद्देवस्येत्यति ॥ मंत्रस्येति ॥ मंत्रस्यैकैकपादेन मंथस्यैकैकं ग्रासं भक्षयतीति योजना ॥ भोजनं मंथद्रव्यमिति संबंधः तत्कथं सवितुः स्यात्प्राणस्य हि मंथद्रव्यमन्नमित्युक्तं तत्राह ॥ प्राणमिति ॥ उच्यते सवि

राम ७

प्राणादित्यर्योरेकत्वेफलितंवाक्यार्थमाह॥आदित्यस्येति॥मंथरूपंतद्भोजनमितिपूर्वेणसंबंधःमार्थेनाविषयंभोजनमेवविशिनष्टि॥येनेति
तस्यैवविशेषणांतरंश्रेष्ठमित्यादिस्थितिकारणत्वमुक्त्वाजनकत्वंपक्षांतरमाह॥अतिशयेनेति॥जगद्व्याप्तौफलदानेवाधातुः॥श्रेष्ठमकि
मिति भोजनेकथ्यमानेध्यानमुच्यतेतत्राह॥विशिष्टेति॥शुद्धधीत्वंध्यानकारणमुक्त्वाप्रकृतकर्मवन्मोक्षितमहत्वहेतुत्वादपिध्यानमनुष्ठे

आदित्यस्यवृणीमहेमार्थ्येमहिमंथरूपंयेनान्नेनसावित्रेणभोजनेनोपभुक्तेनवयंसवितुःस्वरूपापन्नाभवेमेत्यभिप्रा
योदेवस्यसवितुरितिपूर्वेणसंबंधःश्रेष्ठंप्रशस्यतमंसर्वान्नेभ्यःसर्वधातमंसर्वस्यजगतोधारयितृतमं॥अतिशायेनविधात्
तममितिवासर्वथाभोजनविशेषणंतुरंत्वरंतूर्णंधीमहीत्येतत्भगस्यदेवस्यसवितुःस्वरूपमितिशेषःधीमहिविशिष्टमो
जनेनसंस्कृताःशुद्धात्मानःसंतइत्यभिप्रायःअथवाभगस्यश्रियःकारणंमहत्वंप्राप्तुंकर्मकृतवंतोवयंतद्धीमहिचिंतयेमहि

सर्वधातममित्याचामति॥तुरंभगस्यधीमहीतिसर्वंपिबतिनिर्णिज्यकंसंचमसंवापश्चादग्नेःसंविशतिचर्मणिवा
स्थंडिलेवावाचंयमोप्रसाहःसयदिस्त्रियंपश्येत्समृद्धंकर्मेतिविद्यादेतदेषश्लोकोयदाकर्मसुकाम्येषुस्त्रियंस्व
प्नेषुपश्यतिसमृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनेतस्मिन्स्वप्ननिदर्शने॥२॥ सर्वंचमंथलेपंपिबतिनिर्णिज्य।

प्रक्षाल्यकंसंकंसाकारंचमसंचमसाकारंवौदुंबरंपात्रंपीत्वाचम्यपश्चादग्नेःप्राक्शिराःसंविशतिचर्मणिवाऽजिने
स्थंडिलेकेवलायांवाभूमौवाचंयमोवाग्यतःसन्नित्यर्थःप्रसाहोनप्रसह्यतेनाभिभूयतेस्त्र्याद्यनिष्टस्वप्नदर्शनेनप

यमित्याह॥अथवेति॥सावित्रंरूपमुक्त्वानियमेनौदुंबरंवैकल्पिताकारेविशेषःपात्रंप्रक्षाल्यपिबतीतिसंबंधःमंथ (ध्यानध्यासंयत
लेपंपात्रंप्रक्षाल्यपीत्वाचमनपूर्वकमग्नेःपश्चिमभागेकृष्णाजिनव्यवहितायांकेवलायांवाभूमौप्राक्शिराभूत्वाशयीतेत्याह॥पी।
त्वेति॥शयानस्यकर्तव्यंदर्शयति॥वाचंयमइति॥तस्यस्वप्नेकथंचिदुत्तमस्त्रीदर्शनेप्रभागमःसूच्यतइत्याह॥ ॥ ॥ ॥

स एवंभूत इति ॥२॥ प्राणविद्या तदंगकर्म चेत्युभयं उक्तमिदानीमग्निविद्यामारभमाणस्तावदाख्यायिकातात्पर्यमाह ॥ ब्रह्मादीति ॥
तासां च वक्तव्यत्वे हेतुमाह ॥ वैराग्यहेतोरिति ॥ राजाकुमारेति ॥ संबोधयन्नभिमानं श्वेतकेतोरपनिनीषतीति ॥ यथेत्यस्यार्थमाह ॥ येनेति ॥ वि



स एवंभूतो यदि स्त्रियं पश्येत्स्वप्नेषु तदा विद्यात्समृद्धं ममेदं कर्मेति ॥ तदेतस्मिन्नर्थ एष श्लोकोऽपि मन्त्रोऽपि भवति यदा कर्मसु काम्येषु काम्यार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति समृद्धिं तत्र जानीयात्कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः ॥ तस्मिन्स्वप्नादिप्रशस्तस्वप्नदर्शने सतीत्यभिप्रायः द्विरुक्तिः कर्मसमाप्त्यर्था ॥२॥ ब्रह्मादिस्तंबपर्यंताः संसारगतयो वक्तव्याः वैराग्यहेतोर्मुमुक्षूणामित्यत आख्यायिकारभ्यते ॥ श्वेतकेतुर्नामतो ह इत्यैतिह्यार्थः अरुणस्यापत्यमारुणिः तस्यापत्यमारुणेयः पंचालानां जनपदानां समितिं सभामेयायाजगाम स आगतवान्प्रवाहणो नामतो जीवलस्याप-

श्वेतकेतुर्हारुणेयः पंचालानां समितिमेयाय तं ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति वेत्थ यदितोऽधि प्रजाः प्रयंतीति न भगव इति वेत्थ यथा पुनरावर्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य

त्यं जैवलिरुवाचोक्तवान्हे कुमारानु त्वा त्वामशिषदन्वशिषत्पितेति किमनुशिष्टस्त्वं पित्रेत्यर्थः ॥ इत्युक्तः स आहानु हि अनुशिष्टोऽस्मि भगव इति सूचयन्नाह ॥ तं होवाच यद्यनुशिष्टोऽसि वेत्थ यदितोऽस्माल्लोकादूर्ध्वं यत्प्रजाः प्रयंति यद्गच्छन्ति तत्किं जानीष इत्यर्थः ॥ न भगव इत्याहेतरो न जानेऽहं तद्यत्पृच्छसि ॥ एवं तर्हि वेत्थ जानीषे यथा येन क्रमेण पुनरावर्तन्ता३ इति न भगव इति प्रत्याह ॥ वेत्थ पथोर्मार्गयोः सह प्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्तनां व्यावर्तनमितरेतरवियोगस्थानं सह गच्छतामित्यर्थः ॥ न भगव इति प्रत्याह वेत्थ यथासौ लोकः पितृसंबंधी

१९ इदं विदुषोः तुल्यमार्गयोः सतो

द्वौ मार्गौ तयोर्मध्ये देवयानस्येत्यादिपोऽन्यं उक्तवाक्यार्थं संक्षिपति ॥ इतरेतरेति ॥ विदुषां च कर्मिणां च मार्गद्वयमधिकृत्य सहप्र

तत्किं वेत्थेत्यर्थः पितृसंबंधिनं लोकं व्याकरोति॥ यं प्राप्येति॥ आहुतिनिर्वृत्ता इत्यस्य व्याख्यान माहुति साधानाश्चेति अपूर्वरूपाणामपां
भूतांतरसमुच्चयार्थश्चकारः॥ अथवापयो घृतादिरूपेणाहुतिं साधयंतीति चाहुत्या पुनरपूर्वात्मना निष्पन्ना इत्यर्थः॥ क्रमेणेति॥ श्रद्धा सोम
वृष्ट्यन्नरेतसां हवनद्वारेणेति यावत् षष्ठाहुति भूतानामन्त्येष्टिविधानेन शरीराहुतिद्वारा सूक्ष्मतां गतानामित्यर्थः॥ त्वन्तुष्ठार्थं जातानि रिक्ता

यं प्राप्य पुनरावर्तंते बहुभिः प्रयद्भिरपि येन कारणेन न संपूर्यता इति न भगव इति प्रत्याह॥ वेत्थ यथा येन क्रमेण पंच-
म्यां पंचसंख्याकायामाहुतौ हुतायामाहुतिनिर्वृत्ताः॥ आहुतिसाधनाश्चापः पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं या-
सां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषशब्दवाच्या भवंति पुरुषाख्यां लभंत इत्यर्थः इत्युक्तो नैव भ-
गवन्नित्याह॥ नैवाहमत्र किंचन जानामीत्यर्थोऽथैवमज्ञः सन् किमनु कस्मात्त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि॥ यो

पितृयाणस्य च व्यावर्तना३ इति न भगव इति वेत्थ यथासौ लोको न संपूर्यता३ इति न भगव इति वेत्थ यथा पंच
म्यामाहुता॥वापः पुरुषवचसो भवंतीति नैव भगव इत्यथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथं सो
ऽनुशिष्टो ब्रुवीतेति स हायस्तः पितुरर्द्धमेयाय तं होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति

हीमानि मया पृष्टान्यर्थजातानि न विद्यान्न जानीयात्कथं स विद्वत्स्वनुशिष्टोऽस्मीति ब्रुवीतेत्येवं स श्वेतकेतू राज्ञाऽयस्त-
आयासितः सन् पितुरर्द्धं स्थानमेयायागतवांस्तं च पितरमुवाचाननुशिष्यानुशासनमकृत्वैव मा मां किल भगवान्समाव-
र्तनकालेऽब्रवीदुक्तवाननु त्वाशिषं अन्वशिषं त्वामिति यतः पंच पंचसंख्याकान्प्रश्नान् राजन्यबंधुः राजन्याः बंधवोऽस्येति
राजन्यबंधुः स्वयं दुर्वृत्त इत्यर्थः॥ अप्राक्षीत्पृष्टवांस्तेषां प्रश्नानां नैकंचन नैकमपि ॥ विषयमनुशासने मम नास्तीत्यनुशिष्टोऽस्मीत्युक्त-
मित्याशंक्याह॥ यो हीति॥ अननुशिष्य त्वामन्वशिषमिति कथमुक्तवानस्मीत्याशंक्याह॥ पंचेति॥ नैकंचनेत्युक्तमेव नञ् अपदं नाशकमिति

सर्वं धर्मं श्वेतकेतुनकृपात्तमनो मां मतितव मिथ्यावादितास्मीति शेषः॥ पितास्वकीयमिथ्यावादित्वशंकां परिहरति॥ स होवाचेति॥ यथा मा
त्वमित्यादिवाक्यं पूरयित्वा व्याख्यायानेन वाक्यमाकांक्षापूर्वकमुत्थापयति॥ कथमित्यादिना॥ तदा चेति॥ यथेति॥ अज्ञानाविशेषो म-
च्छब्दार्थः॥ अन्यथाभावो ज्ञातेऽपि विषये तत्त्वानुक्तिरिति यावत्त्वदीयमज्ञानं कुतो हेतोर्मया ज्ञातव्यमित्याशंकामुज्ञाय्यानन्तरवाक्येनोत्तरमाह

नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः॥ स होवाच पिता यथा मा मां वत्स त्वं तदा गमनमात्र एतान्प्रश्ना-
नवद उक्तवानसि तेषां नैकंचनाशकं विवक्तुमिति॥ तथा मां जानीहि त्वदीयाज्ञानेन लिंगेन मम तद्विषयमज्ञानं जानीही-
त्यर्थः॥ कथं॥ यथाहमेषां प्रश्नानामेकंचनैकमपि न वेदेति॥ यथा त्वमेतान्न जानीषे तथाहमप्येतान्न जाने इत्यर्थः॥ अतो म-
य्यन्यथाभावो न कर्त्तव्यः॥ कुत एतदेवं यतो यद्यहमिमान्प्रश्नानवेदिष्यं विदितवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्त्त-

पंच मा राजन्यबंधुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति॥ स होवाच यथा मा त्वं तदैतानवदो यथाहमे-
षां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति स ह गौतमो राज्ञोऽर्द्धमेयाय तस्मै ह प्राप्तायार्हां चकार स ह
प्रातः सभाग उदेयाय तं होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं

नकाले पुरा नावक्ष्यं नोक्तवानस्मीत्युक्त्वा स ह गौतमः गोत्रतो राज्ञो जैवलेरर्द्धं स्थानमेयाय गतवान् तस्मै ह गौतमाय प्राप्ता-
यार्हां पूजां चकार कृतवान्॥ स च गौतमः कृतातिथ्य उषित्वापरेद्युः प्रातःकाले सभागे सभां गते राजन्युदेयाय भजनं भा-
गः पूजा सेवा सह भागेन वर्त्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतम उदेयाय राजानमुद्गतवान्॥ तं होवाच गौतमं॥

॥ कृतवानित्यादिना॥ अतस्तव पात्रभूतस्यानुपदेशान्मदीयमज्ञानं ज्ञातव्यमिति शेषः॥ अर्हणां योग्यां पूजामित्यर्थः॥ सभागपदं ससम्ब-
न्धं राजविषयं॥ प्रथमांतं गौतमविषयमिति भेदः॥ गौतममागतं योगक्षेमार्थिनं बुद्ध्वा राजा प्रसन्नः सन्नुक्तवानित्याह॥ तं होवाचेति॥ २॥

तर्हि कृतकृत्यस्य तव किमित्यागमनमित्याशंक्याह ॥ यामेवेति ॥ कृच्छ्रीभावमभिनयति ॥ कथमिति ॥ गौतमस्य वचनं राज्ञो दुःखभावकार
णं तर्हि प्रत्याख्यायतामित्याशंक्याह ॥ सहेति किमिति ॥ तर्हि चिरं वसेत्युक्तवानित्यत आह ॥ न्यायेनेति ॥ संवत्सरं वसेति यावद्वक्तव्या विद्येति
शेषः ॥ कथं राज्ञो ब्राह्मणं प्रत्याज्ञां कुर्वतो न प्रत्यवायः स्यादित्याशंक्याह ॥ यत्पूर्वमिति ॥ प्रत्याख्यानादिविषयं हेतुवचनं ॥ न केवलं विद्या

राजा मानुषस्य भगवन्गौतम मनुष्यसंबंधिनो वित्तस्य ग्रामादेर्वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः स होवाच गौतमः
स्तवैव तिष्ठतु राजन्मानुषं वित्तम् ॥ यामेव कुमारस्य मम पुत्रस्यान्ते समीपे वाचं पंचप्रश्नलक्षणामभाषथा उक्तवानसि ।
तामेव वाचं मह्यं ब्रूहि कथयेत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव ॥ कथं न्विदमिति स ह कृच्छ्रीभूतः प्रत्या ।
ख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयांचकाराज्ञप्तवान् ॥ यत्पू

यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव तꣳह चिरं वसेत्याज्ञापयांचकार तꣳ
होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव
प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥ र्वं प्रत्याख्यातवान्राजा विद्यां यच्च पश्चाच्चिरं वसेति आज्ञप्तवांस्तन्निमित्तं ।
ब्राह्मणं क्षमापयति हेतुवचनोक्त्या तं होवाच राजा सर्वविद्यो ब्राह्मणोऽपि सन्यथा येन प्रकारेण मां मा हे गौतम अवदस्त्वं तामे
व विद्यालक्षणां वाचं मे ब्रूहीति तत्राहं किं करिष्य इत्यर्थः तत्रास्ति वक्तव्यं अज्ञानात्तेन त्वं जानीहि यथा येन प्रकारेणेयं विद्या
प्राक्त्वत्तस्त्वत्तो नु ब्राह्मणान्नागच्छति नागतवती न च ब्राह्मणा अनया विद्ययानुशासितवंतस्तथैतत्प्रसिद्धं लोके यतस्त ।
स्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव ॥ ((वंशादेव श्रैष्ठ्यं
किं तु जातितोऽपीत्यपेरर्थः तर्हि ब्रूहि तां वाचमित्याशंक्याह ॥ तत्रेति ॥ विद्याप्रवचने प्रस्तुते सतीति यावत् ॥ यथेत्यस्यापेक्षितं पूरयति ॥ त

ब्राह्मणानामनया विद्यया प्रशास्तृत्वस्य प्रागभावादिति यावत्॥ इतिशब्दोपात्तमर्थं कथयति॥ क्षत्रियेति॥ उक्तप्रत्याख्यानादिकारणमतः शब्दार्थः॥ ७॥ ननु यथाप्रश्नमेव प्रतिवचनमुचितं॥ पंचमं तु प्रश्नं प्राथम्येन प्रतिवदता क्रमो निराकृतस्तत्र किं कारणमत आह॥ पंचम्यामिति॥ अर्थक्रममनुसृत्य पाठक्रमोभिधातव्य इत्यर्थः॥ ननु वाजसनेयकेग्निहोत्रप्रकरणेग्निहोत्राहुत्यपूर्वपरिणामजगदित्युक्तं तदिहापि विवक्ष्यत इति चेत्किमनेन पिष्टपेषणन्यायेनेत्याशंक्यार्थभेदं वक्तुमग्निहोत्रप्रकरणस्थितमर्थमनुवदति॥ अग्निहोत्राहुत्योरिति॥ उक्तप्रकारमेव प्रदर्शयन्प्रथमं याज्ञवल्क्यस्य जनकं प्रति षट्प्रश्नाननुत्थापयति॥ तं प्रतीति॥ कार्यारंभस्तच्छब्दार्थः॥ अग्निहोत्राहुत्यपूर्वपरिणामो जगदिष्यते तत्राग्निहोत्रे सायंप्रातश्च हुतयोराहुत्योरस्माल्लोकादुत्क्रान्तिरुत्क्रान्तयोः परलोकं प्रति गतिर्गतयोस्तत्र प्रतिष्ठा

क्षत्रियपरंपरयैवेयं विद्यैतावंतं कालमागता तथाप्यहमेतां तुभ्यं वक्ष्यामि॥ त्वत्संप्रदानादूर्ध्वं ब्राह्मणान्गमिष्यत्यतो मया यदुक्तं तत्क्षंतुमर्हसीत्युक्त्वा तस्मै होवाच विद्यां राजा॥ ७॥ पंचम्यामाहुतावाप इत्ययं प्रश्नः प्राथम्येनापाक्रियते तदपाकरणमन्वितरेषामपाकरणमनुकूलं भवेदित्यग्निहोत्राहुत्योः कार्यारम्भो यः स उक्तो वाजसनेयके। तं प्रति प्रश्ना उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायीति॥ तेषां चापाकरणमुक्तं तत्रैव॥ ते वा एते आहुती हुते उत्क्रामतः ते अंतरिक्षमाविशतः ते अंतरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिं ते अंतरिक्षं तर्पयतः॥ ९

प्रतिष्ठितयोः स्वाश्रये संपाद्यमानात्तृप्तिस्तृप्तिमापाद्यावस्थितयोः पुनरिमं लोकं प्रत्यावृत्तिरावृत्तयोराश्रयः पुमान्कथममुं लोकं प्रत्युत्थानशीलो भवतीति कार्यारंभमधिकृत्य षट्प्रश्नाः प्रवृत्ता इत्यर्थः॥ तत्रैव वाजसनेयके याज्ञवल्क्यं प्रति जनकस्य प्रतिवचनं दर्शयति॥ तेषां चेति॥ अपूर्वरूपे खल्वाहुती यजमानमुत्क्रामंतं परिवेष्ट्योत्क्रामतस्ते च धूमादिना यजमानेनान्तरिक्षमाविशतितदाश्रितत्वात्तदाविशतः॥ ते पुनरन्तरिक्षस्य यजमानानुकूलतया स्थिति॥ स्वयमंतरिक्षाधिकरणे तदाहवनीयमिव कुर्वाते॥ आहुत्यधिकरणस्याहवनीयत्वात्तत्र वायुं समिधमिव कुरुतो वायुनान्तरिक्षस्य समिध्यमानत्वाच्छुक्रामाहुतिमिव मरीचिरेवाधत्ते॥ ९॥ ९॥

मरीचीनामंतरिक्षे व्याप्तत्वात्ते चांतरिक्षस्थेन त्विष्टं यजमानं फलोन्मुखमादधाते ।। ते पुनरंतरिक्षादुत्क्रामति यजमाने सहैवोत्क्रामतो
यजमाने च द्युलोकमाविशति सहाविशतस्तमाविश्य तमेवाहवनीयं कुर्वाते ।। आदित्यं समिधमित्यादंतरिक्षवदेवोक्तं ।। यथा वायु-
ती पूर्वमंतरिक्षं तर्पयत इत्युक्तं तथैव द्युलोकस्थयजमानं फलदानेन सुखिनमातन्वाते ।। ते सारभ्यक्षयेन ते द्युलोकाद्यजमाने पृथिवी
माविशन्त्यभूते सहवर्तेते ।। पृथिवीं चाविश्य व्रीह्यादिना स्वाश्रयं श्लेषयित्वा रेतस्सिंच पुरुषमाश्रयद्वारेणाविशतः पुरुषाच्च रेतोद्वारा
द्वितीयां प्रकृतिमाविश्य गर्भीभूतस्वाश्रयं कर्मानुष्ठानयोग्यं देहभागिनमापादयतस्ततोऽसौ पारलौकिकं कर्मानुष्ठायांते लोकमत्यु-
त्थानशीलो भवतीति सर्वं जनकेनोक्तमित्यर्थः ।। तथापि कथमर्थभेदसिद्धिरित्याशंक्योक्तमेव संक्षिप्याह ।। तत्रेति ।। वाजसनेयके सम्प

ते तत उत्क्रामत इत्यादेवमेव पूर्ववत्तद्दिवं तर्पयतस्ते तत आवर्तेते इमामाविश्य तर्पयित्वा पुरुषमाविशतस्ततः स्त्रिय-
माविश्य लोकं प्रत्युत्थायी भवतीति तत्राग्निहोत्राहुत्योः कार्यारंभमात्रमेवं प्रकारं भवतीत्युक्तं ।। इह तु तं कार्यारंभमग्निहो-
त्रापूर्वपरिणामलक्षणं पंचधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाहासौ वाव लोकोऽग्निरि-
त्यादि इह सायंप्रातरग्निहोत्राहुती हुते पय आदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरंगारविस्फुलिंगभा-
विते कर्त्रादिकारकभाविते चांतरिक्षक्रमेणोत्क्रम्य द्युलोकं प्रविशंत्यौ सूक्ष्मभूते अप्समवायित्वादप्शब्दवाच्ये श्रद्धाहे-
तुत्वाच्च श्रद्धाशब्दवाच्ये तयोरधिकरणोऽग्निः अन्यच्च तत्संबद्धं समिदादि

((र्थः ।। प्रकृतश्रुतेरर्थविशेषं दर्शयति ।। इह त्विति ।। पं-
चधा द्युपर्जन्यपृथिवीपुरुषयोषित्प्रकारैरिति यावत्पंचाग्निसंबंधमवतार्य प्रथमपर्यायस्य तात्पर्यमाह ।। इहेति ।। अयं समन्वयार्थः ।। आ-
हुत्योरप्समवायित्वसिध्यर्थं विशिनष्टि ।। पय आदीति ।। तयोः श्रद्धात्वसिध्यर्थं श्रद्धापुरःसरे इत्युक्तं ।। तयोरधिकरणोऽग्निरित्यादिकल्पनो-
पयोगित्वेन विशेषणांतरमादत्ते ।। आहवनीयेति ।। तयोः स्वातंत्र्यं परिहरति ।। कर्त्रादीति ।। अधिकरणशब्दो भावप्रधानो धर्मिपरः काल्पनि-
को द्युलोकाख्योऽग्निस्तत्संबंधमिति तच्छब्दोऽग्निविषयः ।। अन्यच्चेत्युक्तं स्पष्टयति ।। समिदादीति ।। आदिशब्दो धूमार्चिरंगारादिविषयः ।।

।।।

छां॰ भ॰ ११ | अ॰ ५

पर्यायतात्पर्यमुक्त्वा अक्षराणि व्याकरोति ॥ असावित्यादिना ॥ इहेत्येतल्लोकनिर्देशः पूर्वेण संबध्यते तदुत्थानादित्यत्र तच्छब्देनादित्यो गृहीतः ॥ अध्यात्माधिदैवविभागेन देवान्विशदयति ॥ यजमानेति ॥ प्राणस्य विशेषणत्वेन श्रद्धाया होम्यत्वानुपपत्तिरित्याशंक्य श्रद्धां व्याकरोति ॥ अग्निहोत्रेति ॥ किंच प्रश्नप्रतिवचनयोरैकार्थ्यत्वात्प्रश्ने चापां होम्यतया श्रुतत्वात्प्रतिवचनेऽपि ताः श्रद्धाशब्दिता होम्यतया विवक्षिता इ-

निर्दिश्यमाना चासावग्न्यादिभावना । क्रत्वोः साऽपि तथैव निर्दिश्यते ॥ असौ वाव द्युलोकोऽग्निर्हे गौतम यथाग्निहोत्राधिकरणं आहवनीय इह तस्याग्नेर्द्युलोकाख्यस्यादित्य एव समित्तेन हीद्धोऽसौ लोको दीप्यते । अतः समिन्धनात्समिदादित्यः । रश्मयो धूमस्तदुत्थानात्समिधो हि धूम उत्तिष्ठति । अहरर्चिः प्रकाशसामान्यादादित्यकार्यत्वाच्च । चन्द्रमा अंगारा अहःप्रशमेऽभिव्यक्तेरर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते ॥ नक्षत्राणि विस्फुलिंगाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात्तस्मिन्नेतस्मिन्यथोक्तलक्ष-

असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अंगारा नक्षत्राणि विस्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ॥ ५ ॥

णेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपाः । अधिदैवतं श्रद्धां अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्माः आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते ॥ पंचम्यामाहुतावापः पुरुषवचसो भवन्तीत्यपां होम्यतया प्रश्ने श्रुतत्वाच्छ्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्तीति च विज्ञायते ॥ तां श्रद्धामब्रूपां जुह्वति तस्या आहुतेः सोमो राजा अपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा संभवति ॥ यथा ऋग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यश आदिकार्यं रोहितादिरूपलक्षणमारंभन्त इत्युक्तं ॥

स्याह ॥ पंचम्यामिति ॥ अप्सु श्रद्धाशब्दस्य वृद्धव्यवहारप्रयोगाभावान्नैवमित्याशंक्याह ॥ श्रद्धेति ॥ कथमापः श्रद्धाशब्देन प्रसिद्धवदुच्यन्ते तत्राह ॥ श्रद्धामिति ॥ श्रद्धापूर्वकं होममुद्दिश्य पयःसोमाज्यादिसाधनं संपाद्य जुहोति इति तैत्तिरीयकाः पठन्ति तथा चाप्सु श्रद्धाशब्दः संभवतीत्यर्थः ॥ उक्तमर्थं दृष्टान्तेन

राम ११

चांद्रं कार्यं चंद्रसमीपस्थं तत्सदृशं शरीरमित्यर्थः॥ तथापि यजमानानां कथं फलित्वमत आह॥ यजमानाश्चेति॥ आहुतीतच्छब्दवाच्ये॥ प्रा
धान्यमयस्यार्थः तदेव स्पष्टयति॥ आहुति भावनाभाविताहुति॥ तत्संस्कृतास्तदनुसारिणस्तदाश्रया इत्यर्थः॥ तद्भावितत्वफलमाह॥ आ
हुतिरूपेणेति॥ तेनाकृष्टत्वं वशीकृतत्वं आहुतिभावितादृत्युक्तं स्पष्टयति॥ श्रद्धेति॥ तत्पूर्वकपयःसोमादिसाध्यत्वकर्मतदाश्रया इत्यर्थः॥ द्यु
सोमभूतास्तत्समीपस्थं शरीरं प्राप्तास्तत्स्वरूपा इत्यर्थः कथं सोमसारूप्यं धर्मिणां फलतीत्याशंक्याह॥ तदर्थमिति॥ यजमानानां सोमभावो

तथेमा अग्निहोत्राहुती समवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चांद्रं कार्यमारभंते फलरूपमग्नि
होत्राहुत्योर्यजमानाश्च तत्कर्तार आहुतिमयाः आहुतिभावनाभाविताः॥ आहुतिरूपेण कर्मणाकृष्टाः श्रद्धासमवायिनो द्यु
लोकमनुप्रविश्य सोमभूता भवंति॥ तदर्थं हि तैरग्निहोत्रं हुतमत्र त्वाहुतिपरिणाम एव विवक्षितो न तु ... प्राधान्येन वि

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरंगाराह्रादनयो विस्फुलिंगास्तस्मिन्नेत ((स्मिन्नग्नौ देवाः

वक्षितउपासनार्थं न यजमानानां गतिस्तां त्विदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषां चोत्तरां वि
द्याकृतां॥४॥ द्वितीयहोमपर्यायमाह॥ पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेष
स्तस्य वायुरेव समिद्वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्राबल्ये वृष्टिदर्शनादभ्रं धूमो धूमकार्यत्वाद्धूमवच्च लक्ष्यमा
णत्वाद्विद्युदर्चिः प्रकाशसामान्यादशनिरंगाराः काठिन्याद्विद्युत्संबंधाद्वा ह्रादनयो विस्फुलिंगा ह्रादनयो गर्जितशब्दाः मेघा ((नां विप्रकीर्ण

गतिमंतरेण सिध्यति॥ तथा च वक्तव्या गतिरित्याशंक्याह॥ अत्रेति॥ आहवनीयाग्निः सप्तम्यर्थः सा तर्हि कुतो वाच्येत्येन हित
दुक्तिमंतरेण यथोक्तं फलं सिध्यतीत्यत आह॥ तां त्विति॥४॥ द्वितीयहोमसंबंधी द्वितीयः पर्यायस्तस्यार्थं निर्ज्ञातुं तमेव पर्यायमाहेत्यत्र श्रुतिरि
त्यर्थः॥ पुरोवातादीत्यादिशब्देन वर्षहेतुर्वायुभेदो गृह्यते उक्तं चाभाणि धूमकार्यत्वं पौराणिकैः यतो धूमोद्भवं त्वभ्रं द्विजानां च हितं सदा॥५॥

छां॰ भा॰ टी॰

112

दावाग्निधूमसंभूतमभ्रंवनहितंस्मृतं॥मृतधूमोद्भवंत्वभ्रमशुभायभविष्यति॥अभिचाराग्निधूमोत्थंभूतनाशायवैद्विजाइति॥अथवायंय
जमानस्यप्राणाइंद्रादयस्तुअधिदैवंदेवाइत्याह॥पूर्ववदिति॥सोमंराजानमित्यादिव्याचष्टे॥अ



तस्मिन्नेतस्मिन्नग्नौदेवाःपूर्ववत्॥सोमंराजानंजुह्वतितस्याआहुतेर्वर्षंसंभवति॥श्रद्धाख्याआपःसोमाकारपरिणताद्वितीय
पर्यायेपर्जन्याग्निंप्राप्यवृष्टित्वेनपरिणमंते॥५॥पृथिवीवावगौतमाग्निरित्यादिपूर्ववत्तस्याःपृथिव्याख्यस्याग्नेःसंवत्सर
एवसमित्संवत्सरेणहिकालेनसमिद्धापृथिवीव्रीह्यादिनिष्पत्तयेभवत्याकाशोधूमःपृथिव्याइवोत्थितआकाशोदृश्यतेयथा
ग्नेर्धूमोरात्रिरर्चिःपृथिव्याह्यप्रकाशात्मिकायाअनुरूपारात्रिस्तमोरूपत्वादग्नेरिवानुरूपमर्चिर्दिशोंगाराउपशांतत्वसा

सोमंराजानंजुह्वतितस्याआहुतेर्वर्षंसंभवति॥५॥पृथिवीवावगौतमाग्निस्तस्याःसंवत्सरएवसमिदाका
शोधूमोरात्रिरर्चिर्दिशोंगाराअवांतरदिशोविस्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवावर्षंजुह्वतितस्याआहुतेरन्नं
संभवति॥६॥पुरुषोवावगौतमाग्निस्तस्यवागेवसमित्प्राणोधूमोजिह्वार्चिश्चक्षुरंगाराःश्रोत्रंविस्फुलिंगास्त
स्मिन्नेतस्मिन्नग्नौदेवाअन्नंजुह्वतितस्याआहुतेरेतःसंभवति॥७॥मान्यादवांतरदिशोविस्फुलिंगाःक्षुद्रत्वसामा
न्यात्तस्मिन्नित्यादिसमानंतस्याआहुतेरन्नंव्रीहियवादिसंभवति॥६॥पुरुषोवावगौतमाग्निस्तस्यवागेवसमिद्वाचा
हिमुखेनसमिध्यतेपुरुषोनमूकःप्राणोधूमोधूमइवमुखान्निर्गमनोजिह्वार्चिर्लोहितत्वाच्चक्षुरंगाराभासाश्रय
त्वात्॥श्रोत्रंविस्फुलिंगाविप्रकीर्णत्वसाम्यात्समानमन्यत्॥अन्नंजुह्वतिव्रीह्यादिसंस्कृतं॥तस्याआहुतेरेतःसंभवति
॥७॥योषावावगौतमाग्निस्तस्याउपस्थएवसमित्तेनहिसापुत्राद्युत्पादनायसमिध्यते॥यदुपमंत्रयतेसधूमःस्त्रीसंभ
वादुपमंत्रणस्ययोनिरर्चिर्लोहितत्वाद्यदंतःकरोतितेंगाराअ ग्निसंबंधा द्वारख्याइति॥५।६।७॥तस्याआहुतेर्गर्भःसंभव

एवमिति॥ यथोक्तरीत्या श्रद्धादीनां रेतोंतानां यानि द्युलोकादिषु योषिदंतेष्वग्निषु हवनानि तेषामेकैकस्मिन्पर्याये यः क्रमो व्यारब्धस्तेनेति।
यावत्कथं पुनरापो गर्भीभवंति भूतांतराणामपि तुल्यो गर्भीभावस्तस्य पांचभौतिकत्वादत आह॥ तत्रेति॥ भूतानामप्येकमित्यपां प्राधान्यवि-
वक्षयैव निर्देशस्तासामेव केवलानां कार्यारंभकत्वविवक्षा किं न स्यात्तत्राह॥ न त्विति॥ भूतांतरैः सह कृतानां केवलानामपामारंभकत्वे यदार-
ब्धं कार्यं न तद्दृष्टमायतनस्य जलबुद्बुदवदस्थितत्वचलत्वादित्यर्थः॥ केवलानामपामनुपपत्त्युक्तमिदानीं तद्वर्तनालीत्यत आह॥ न चेति॥ इति-

इभिनंदाः सुखलवा विस्फुलिंगाः क्षुद्रत्वात्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवतीति॥ एवं श्र-
द्धासोमवृष्ट्यन्नरेतोहवनपर्यायक्रमेणाप एव गर्भीभूतास्तास्तत्रापामाहुतिसमवायित्वात्प्राधान्यविवक्षा आपः पंचम्या-
माहुतौ पुरुषवचसो भवंतीति न त्वाप एव केवलाः सोमादिकार्यमारभंते॥ न चापोऽत्रिवृत्कृताः संतीति त्रिवृत्कृतत्वेऽपि विशे-

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमंत्रयते स धूमो योनिरर्चिर्यदंतः करोति तेंऽगारा अभिनं-
दा विस्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति॥ १॥ (षसंज्ञालाभो दृष्टः पृथिवी-

यमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तस्तस्मात्समुदितान्येव भूतान्यब्बाहुल्यात्कर्मसमवायीनि सोमादि-
कार्यारंभकाण्याप इत्युच्यंते॥ दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु बहु द्रवं च शरीरं यद्यपि पार्थिवं तत्र पंचम्यामा-
(हुतौ हुतायां रेतो

शब्दस्तासां त्रिवृत्त्वे त्रिवृतमेकैकामकरोदिति श्रुतेरिति हेत्वर्थः॥ सर्वेषु त्रिवृत्कृतत्वे कथं दृष्टो विशेषव्यपदेशो युज्येतेत्या-
शंक्याह॥ त्रिवृत्कृतत्वेऽपीति॥ अपां प्राधान्यविवक्षया प्रश्नप्रतिवचनयोरप्शब्दद्वयुक्तमुपसंहरति॥ तस्मादिति॥ केवलानामपामसत्त्वादिति।
यावत्कथमारंभकेषु भूतेष्वपां बाहुल्यमवगतमित्याशंक्य कार्यद्वारा तदधिगतिरित्याह॥ दृश्यते चेति॥ सोमादीनामब्बाहुल्येऽपि कथं पार्थिवशरीर-
स्य तद्बाहुल्यमित्याशंक्याह॥ बहु द्रवं चेति॥ पंचमप्रश्ननिर्णयमुपसंहर्तुं पातनिकां करोति॥ तत्रेति॥ योषाग्नाविति यावद्गर्भीभूताः पुरुषवचसो भवं-

उक्तार्थे वाक्यं योजयति ॥ इतीति ॥ अयं गर्भीभावोक्तिमात्रेण पुरुषवचस्त्वस्यानिर्णीतत्वादलमुत्तरग्रंथेनेत्याशंक्य तस्य तात्पर्यमाह ॥ यत्विति ॥ आहुत्योः संबंधीति शेषः ॥ प्रासंगिकं गर्भीभावोक्तिप्रसंगादागतमित्यर्थः ॥ वृद्धिहेति प्रक्रान्तस्य तूक्तिः ॥ प्रासंगिकीं संगतिं त्यक्त्वा साक्षादेव पूर्वोत्तरग्रंथयोरस्ति संगतिरिति तात्पर्यान्तरमाह ॥ इह चेति ॥ प्रजानामूर्ध्वगमनमुत्तरत्र निरूपयिष्यते तदर्थं नतासामुत्पत्तिरादावुच्यत इत्यर्थः ॥ द्विधा संगतिमुक्त्वा वाक्याक्षराणि योजयति ॥ स गर्भ इति ॥ सोमरूपत्वं नरेतांस्यपेक्ष्य पंचमत्वं विशेषणं गर्भाख्यस्य परिणामस्य द्रष्टव्यम् ॥ अपां

इति त्वेवं तु पंचम्यामाहुतावापः पुरुषवचसो भवंतीति व्याख्यात एकः प्रश्नो यत्तु द्युलोकादिमां प्रत्यावृत्तयो राहुत्योः पृथिव्यां पुरुषं स्त्रियं क्रमेणाविश्य लोकं प्रत्युत्थायी भवंतीति वाजसनेयके उक्तं तत्प्रासंगिकमिहोच्यते ॥ इह च प्रथमे प्रश्न उक्तं वेत्थ यदितो ऽधि प्रजाः प्रयंतीति तस्य चायमुपक्रमः ॥ स गर्भोऽपां पंचमः परिणामविशेष आहुतिकर्मसमवायिनीनां श्रद्धाशब्द-

इति तु पंचम्यामाहुतावापः पुरुषवचसो भवंतीति स उल्बावृतो गर्भो दश वा मासानंतः शयित्वा यावद्वाथ जायते ॥

वाच्यानां ॥ उल्बावृत उल्बेन जरायुणावृतो वेष्टितो दश वा नव वा मासानंतर्मातुः कुक्षौ शयित्वा ॥ यावता कालेन न्यूनेनातिरिक्तेन वा यावदनंतरं जायते ॥ उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते ॥ कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्द्धमानस्य निरुद्ध-

इति नवमः खण्डः

प्रकृतत्वद्योतनार्थमाहुतीत्यादिविशेषणद्वयम् ॥ अथवा पूर्वोक्तकालान्न्यूनाधिकेन वा कालेन यावता जंतुः समग्रांगो जायते तावता कालेन कुक्षौ शयित्वेति संबंधः ॥ अनंतरं योनितो निर्गमनकारणीभूतकर्माभिव्यक्तेरिति शेषः ॥ उल्बावृतत्वं कुक्षौ चिरं शयनं योनितो निःसरणमित्येतदशेषप्राणिप्रसिद्धं किमिति श्रुत्या व्यपदिश्यते तत्राह ॥ उल्बावृत इत्यादीति ॥ वैराग्यार्थत्वमस्य स्फुटयति ॥ कष्टं हीति ॥ श्लेष्मादीत्यादिशब्देनासृक्पूयस्नायुमज्जादीनि गृह्यंते ॥ तदनुलिप्तस्येति तच्छब्दो मूत्रपुरीषादिविषयः ॥ शक्तिर्बुद्धिसामर्थ्यं बलं देहसामर्थ्यं वीर्यमिंद्रियसामर्थ्यं तेजः शरीरगतकांतिः

प्रज्ञा चेतना जीवनधर्मः चेष्टा प्राणधर्मः तानि रुद्धानि यस्य तस्येति विग्रहः ॥ मातुरुदरे शयानस्य कष्टत्वेपि तदुदराद्योनिद्वारा निःसरणं सुखकरमि
ति चेन्नेत्याह ॥ ततइति ॥ तच्छाहकान्तप्रकारमेवाभिनयति ॥ मुहूर्त्तमपीति ॥ यन्मातुरंतः शयनं मुहूर्त्तमपि दुःसहं तत्कथं दीर्घकालमपि तु शक्यं
॥ कथं च दशवा नववा मासानंतः शयित्वा पुनर्योनिद्वाराद्दुष्करं निःसरणं दुःसहं स्यादिति वैराग्यं ग्राहयति श्रुतिरित्यर्थः ॥ जातस्य पुनरनर्थो न
स्तीत्याशंक्याह ॥ एवमिति ॥ यावदायुषमित्येतद्व्याचष्टे ॥ पुनरिति ॥ घटीयंत्रवदूर्ध्वगमनार्थं वा निषिद्धकर्म यो नः पुण्येनाचरन्यावत्कर्मणार्जित

प्रज्ञाचेष्टस्य शयनं ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति ॥ मुहूर्तमप्यसह्यं दशवा मासानति
दीर्घकालमंतः शयित्वेति यावत्स एवं जातो यावदायुषं पुनर्घटीयंत्रवद्गमनागमनाय कर्म कुर्वन्कुलालचक्रवद्वा तिर्यग्भ्रमणा
य यावत्कर्मणोपात्तं आयुस्तावज्जीवति ॥ तमेवं क्षीणायुषं प्रेतं मृतं दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति यदि चेज्जीवन्वैदिके कर्मणि
विज्ञाने वाधिकृतस्तमेनं मृतमितोऽस्माद्ग्रामादग्नये अग्न्यर्थं ऋत्विजो हरंति पुत्रा वा ऽन्त्यकर्मणे यत एव इत आगतः अग्नेः सका

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरंति यत एवेतो यतः संभूतो भवति ॥ १ ॥

शाच्छ्रद्धाद्याहुतिक्रमेण यतश्च पंचभ्योऽग्निभ्यः संभूत उत्पन्नो भवति ॥ तस्मादेवाग्नये हरंति ॥ स्वामेव योनिमग्निमापादयंतीत्य
त्यर्थः ॥ १ ॥ वैन्यथ यदि तोऽधिप्रजाः प्रयंती त्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्तव्य तया तत्र लोकं प्रत्युत्थिताना मधिकृतानां गृहमेधि
<< नोऽपद्युत्यमेवं यथोक्तं पंचा

मायुस्तावदस्मिन्देहे जीवति ततो म्रियते तथा च जातस्य मृत्युर्ध्रुव्यान्नास्ति सम्यक्ज्ञानं विना स्वस्ति प्राप्तिरित्य
र्थः ॥ अस्तु तर्हि मृतस्य दानकृत्यं तेत्याशंक्याह ॥ तमेवमिति ॥ सर्वस्य तर्हि मृतस्य परलोकित्वं स्यादितिचेन्नेत्याह ॥ यदीति ॥ तदा परलोकं प्रति
कर्मणा निर्दिष्टमिति पूर्वेण संबंधः ॥ युक्तं च तन्मृतस्याग्न्यर्थं नयनमित्याह ॥ यतइति ॥ १ ॥ स उल्बावृत इत्यादिना क्रमनुवदति ॥ वेत्थेति ॥ प्रत्यु
पस्थितः प्रजोत्पत्ति प्रदर्शनेन प्रसंगत इति यावत् यथावत्थ विदुरित्येतद्व्याचष्टे ॥ तत्रेत्यादिना ॥ स प्रश्नार्थमेव स्फोरयति ॥ लोकमिति ॥ निद्धारेणा

॥द्युलोकादीति॥ तेषां विषमभिसंभवंतीत्युत्तरत्र संबंधः॥ साधारण्योक्तेर्विशेषसंकोचो हेतुं विना न सिध्यतीति शंकते॥ कथमिति॥ पारिशेष्यं संको-
चकमिति परिहरति॥ गृहस्थानामिति॥ षष्ठी निर्धारणे। तत्र केवलकर्मिणो गृहस्थान विदुरिति ग्रहणमर्हतीति शेषः॥ परिव्राजकानामग्र-
स्याश्च ग्रहणं तामिति चेन्नेत्याह॥ ये चेति॥ केषां तर्हि ग्रहणमत आह॥ पारिशेष्यादिति॥ गृहस्थ एवं हेत्वंतरमाह॥ अग्निहोत्रेति॥ तदाहुत्यपूर्वप-
रिणामात्मकं जगदत्र पंचधा प्रविभज्याग्नित्वेन दर्शनमुत्तरमार्गप्राप्तिसाधनं चोद्यते तेनाविद्यायाः तत्संबंधाद्गृहस्थानामपि तत्संबंधस्य प्राप्तत्वात्ते-
षामेव ग्रहणमुचितमित्यर्थः॥ पारिशेष्यमाक्षिपति॥ नन्विति॥ ग्रामे सपत्नीको वासो न च ब्रह्मचारिणां पत्नीसंबंधः तच्च ग्रामश्रुत्या ब्रह्मचारि-

द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पंचाग्न्यात्मान इत्येवं विदुर्जानीयुः कथमवगम्यते इत्थं विदुरिति गृ-
हस्था एवोच्यंते नान्य इति॥ गृहस्थानां ये त्वनित्थंविदः केवलेष्टापूर्तदत्तपरास्ते धूमादिना चंद्रं गच्छंतीति वक्ष्यति॥ ये चा-
रण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धातप इत्युपासते तेषां चेत्थंविद्भिः सहार्चिरादिना गमनं वक्ष्यति॥ पारिशे-

तद्य इत्थं विदु ॥ १ ॥ ५ ॥ १ ॥

ष्यादग्निहोत्राहुतिसंबंधाच्च गृहस्था एव गृह्यंते इत्थं विदुरिति॥ ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्यारण्यश्रुत्या चा-
नुपलक्षितास्तेऽपि चेत्थं कथं पारिशेष्यसिद्धिः नैष दोषः पुराणस्मृतिप्रामाण्यादूर्ध्वरेतसां नैष्ठिकब्रह्मचारिणामुत्तरेणार्यम्णः
पंथाः प्रसिद्धोऽतस्तेऽप्यरण्यवासिभिः सह गमिष्यंति॥ ११ णो गृहीता गुरुकुलवासित्वाच्च॥ नारण्यश्रुत्योपलक्षितास्तेन तेषामिहग्र-

हणसंभवान्न पारिशेष्यमित्यर्थः॥ किं नैष्ठिकब्रह्मचारिणोऽत्रेत्थं विदुरिति गृह्येरन् किं वोपकुर्वाणा इति विकल्प्याद्यं दूषयति॥ नैष दोष इति॥ अ-
ष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसां स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनामित्यादिपुराणस्मृतेः श्रुतिमूलत्वेन प्रामाण्यान्नैष्ठिकब्रह्मचारि-
णामूर्ध्वरेतसामादित्यसंबंधेनोत्तरायणेनोपलक्षितो देवयानाख्यो मार्गो यावत्प्रसिद्धस्तस्मात्तेषामरण्यवासिभिः सहार्चिरादि तद्ब्रह्मचर्येणैवा

द्वितीयं प्रत्याह ॥ उपकुर्वाणकास्त्विति ॥ ते हि स्वाध्यायग्रहणार्थाः तस्मिन्गृहीते स्वेच्छावशादाश्रमांतरं गृह्णंतस्तत्फलेनैव फलवंतो भवंतीति न गृ
हस्थादिभ्यो विभज्येत्थं विदुरिति निर्देशमर्हंतीत्यर्थः ॥ किं नैष्ठिकानां ब्रह्मचारिणामुत्तरमार्गप्राप्तिसंभवादनर्थकमित्थंवित्त्वं प्राप्तमिति श्रुतिवि
रोधाद्द्वितीयेत्रुपाविशेष्याः सिद्धितादवस्थ्यमिति शंकार्थः ॥ किमित्थंवित्त्वं नैष्ठिकानामत्यनर्थकमित्युच्यते किंवा सर्वान्नेव प्रतीति विकल्प्याद्यमंगी
कृत्य द्वितीयं दूषयति ॥ न गृहस्थानिति तान्प्रत्यर्थवत्त्वमेवेत्थंवित्त्वस्य विभज्य समर्थयंते ॥ ये गृहस्था इति ॥ स्वभावतस्तदनुष्ठितेष्टापूर्तवला
दित्यर्थः ॥ तेषामेव गृहस्थानां मध्ये ये केचिदुक्तेन प्रकारेणेत्थं पंचाग्निदर्शनं विदुरग्निभ्यो न्यद्वा सगुणं ब्रह्म विदुस्ते देवयानेनोत्तरपथा गच्छंतीति
संबंधः न केवलं गृहस्थानां पंचाग्निवित्त्वमेव किंतु सगुणब्रह्मवित्त्वमपि तेषामस्तीति प्रमाणमाह ॥ अथेति ॥ अनेनेष्टिकरणाकरणापारविशेष

उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः ॥ ननूर्ध्वरेतस्त्वं चेदुत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्र
माण्यादिष्यते इत्थंवित्त्वमनर्थकं प्राप्तं न गृहस्थानामर्थवत्त्वात् ये गृहस्था अपि नेत्थं विदुस्तेषां स्वभावतो दक्षिणो धूमादिः ।
पंथाः प्रसिद्धस्तेषां य इत्थं विदुः सगुणं वान्यद्ब्रह्म विदुरथ यदु चैवास्मिंच्छव्यं कुर्वंति यदि च नार्चिषमेवेति लिंगादुत्तरेण तेग ।
च्छंति ननूर्ध्वरेतसां गृहस्थानां च समाने आश्रमित्व ऊर्ध्वरेतसामेवोत्तरेण पथा गमनं नेन गृहस्थानामिति न युक्तमग्निहो ।
त्रादिवैदिककर्मबाहुल्ये च सति ॥ नैष दोषोऽपूता हि ते शत्रुमित्रसंयोगवियोगनिमित्तं हि तेषां रागद्वेषौ तथा धर्माधर्मौ
हिंसानुग्रहनिमित्तौ हिंसानृतमायाऽब्रह्मचर्यादि च

॥ णब्रह्मविदामर्चिरादिगतिश्रवणादत्र गृहस्थानामपि ब्रह्मवित्त्वमि
तिगम्यते परिव्राजकादिष्वंतेष्वसंभवेन विद्यास्तुतेरपि दुर्वचनत्वादित्यर्थः ॥ विहितत्वाविशेषादाश्रमाणां तुल्यत्वमाश्रित्य शंकते ॥ नन्वि
ति ॥ साम्यमुक्त्वा गृहस्थेषु विशेषं दर्शयति ॥ अग्निहोत्रादीति ॥ वैदिकानि कर्माणि भूयांसि संति तेषां च बाहुल्ये सत्यविदुषामूर्ध्वरेतसामेव
देवयानेन पथा गमनं न गृहस्थानामित्ययुक्तं साधानभूयस्त्वे फलभूयस्त्वन्यायविरोधादित्यर्थः ॥ आश्रमित्वाविशेषेपि धर्मविशेषाद्विशु
द्धितारतम्यसंभवान्नैकरूप्यमिति परिहरति ॥ नैष इति ॥ कथं गृहस्थानामग्निहोत्रादिभूयोधर्मवत्त्वेपि विद्याहीनानामपूतत्वं तत्राह ॥ श

पदेनपरिग्रहीत्वादिगृह्यते॥अशुद्धिबाहुल्यकारणमतःशब्दार्थः॥तुल्यमूर्ध्वरेतसामप्यशुद्धिहेतुबाहुल्यादपूतत्वमित्याशंक्याह॥हिंसेति॥ऊर्ध्व
रेतसांपूतत्वेसिद्धेफलितमाह॥तेषामिति॥ऊर्ध्वरेतसांदेवयानेपथ्यनुप्रवेशेप्रमाणमाह॥तथाचेति॥पौराणिकाआहुरितिसंबंधः॥आश्रमधर्मसा
त्रमार्गद्वारेणामृतत्वमूर्ध्वरेतसामुक्तमाक्षिपति॥इत्थंविदामिति॥तेषांविद्यानर्थक्यमिष्टमेवेत्याशंक्याह॥तथाचेति॥सपरमात्मास्वयमहा
तःसन्नेनमधिकारिणमपवर्गप्रदानेनपालयतीतिचवाक्यंविद्यामन्तरेणामृतत्वंब्रुवतोविरुद्धमित्यर्थः॥ऊर्ध्वरेतसाममृतत्वस्यापेक्षिकत्वान्न
विद्यानर्थक्यमेवेतिपरिहरति॥नाभूतेति॥आपेक्षिकममृतत्वमित्यत्रप्रमाणमाह॥तत्रैवेति॥यत्रप्रजाःकामयमानामुक्तिभाजोभवन्तीत्युक्तंत॥

बहुशुद्धिकारणमपविहायैतेषामतोऽपूताअपूतत्वान्नोत्तरेणपथागमनंहिंसानृतमायाःब्रह्मचर्यादिपरिहाराच्चशुद्धात्मा
नोहीतरेशत्रुमित्ररागद्वेषादिपरिहाराच्चविरजसस्तेषामुक्तउत्तरःपन्थाःतथाचपौराणिकाःयेप्रजामीषिरेधीरास्तेश्मशा
नानिभेजिरेयेप्रजांनेषिरेधीरास्तेमृतत्वंहिभेजिरेइत्याहुः॥इत्थंविदांगृहस्थानामरण्यनिवासिनांचसमानमार्गत्वेऽमृ
तत्वफलेचसत्यरण्यनिवासिनांविद्यानर्थक्यंप्राप्तं॥तथाचश्रुतिविरोधः॥नतत्रदक्षिणायन्तिनाविद्वांसस्तपस्विनइति
सएनमविदितोनभुनक्तीतिचविरुद्धं॥नआभूतसंप्लवस्थानस्यामृतत्वेनविवक्षितत्वात्तत्रैवोक्तंपौराणिकैः॥आभूतसं
प्लवंस्थानममृतत्वंहिभाष्यतइति॥यच्चात्यन्तिकममृतत्वंतदपेक्षयानतत्रदक्षिणायन्तिसएनमविदितोनभुनक्तीत्या
द्याःश्रुतयइत्यतोनविरोधः॥नचपुनरावर्तन्तइमंमानवमावर्तंनावर्तन्तइत्यादिश्रुतिविरोधइतिचेन्नइमंमानवमितिवि
शेषणात्तेषामिहनपुनरावृत्तिरस्तीतिच॥यदिह्येकान्तेनैवनावर्तेरन्निमं ((अत्रैवतत्सन्निधावितियावत्कथंतर्हियथोक्तश्रुतिविरोधसमा-

धिरित्याशंक्याह॥यद्येति॥आदिशब्दस्तमेवंविद्वानमृतइहभवतीत्यादिश्रुतिसंग्रहार्थः॥आपेक्षिकामृतत्वेश्रुतिविरोधोनशक्यतेपरिहर्तुमिति
शंकते॥नचेति॥आदिशब्दस्तेषामिहनपुनरावृत्तिरित्यादिवाक्यसंग्रहार्थः॥इममिहेतिविशेषणावष्टंभेननिराचष्टेनेत्यादिना॥तदेवव्यतिरेकमु
खेनविशदयति॥यदीति॥सर्वकल्पेष्वश्रुतेरेतादृशत्वादिममिहेतिपदद्वयसामान्येनसर्वकल्पविषयेविशेषणानर्थक्यंदुर्वारमित्युत्तरमाह॥ १

॥ नानावृत्तीति॥ विध्यंतरेण विशेषणार्थसंभवे फलितमाह॥ अत इति॥ यस्मिन्काले ब्रह्मलोकप्राप्तिस्तस्मात्कल्पांतरमन्यत्रेत्युक्तं॥ ऊर्ध्वरे
तसामाश्रमधर्ममात्रनिष्ठानां अमृतत्वमापेक्षिकमुपक्षिप्तं संप्रति तेषामेव साक्षात्कृतब्रह्मतत्त्वानामात्यंतिकममृतत्वं गतिनिरपेक्षं सिध्यती
त्याह॥ न चेति॥ तेषां गत्यादिनिरपेक्षमात्यंतिकममृतत्वं भवतीत्यत्र प्रमाणमाह॥ ब्रह्मैवेति॥ न तस्य प्राणा उत्क्रामंतीति॥ माध्यंदिनश्रुतिम
नुसृत्य न तस्येत्यादिकाण्वश्रुतिरपि नेतव्येति शंकते॥ तस्मादिति॥ वाक्यशेषविरोधान्नैवमिति दूषयति॥ नात्रेति॥ श्रुत्यंतरालोचनायामपि न स्व
रूप्या कल्पनेत्याह॥ सर्वे प्राणा इति॥ प्राणैः सह जीवस्येति शेषः॥ संसारदशायां प्राणैः सह विज्ञानात्मनो गमनेऽपि मोक्षे नास्ति प्राणानां जीवेन स

मानवमिहेति च विशेषणमनर्थकं स्यादिममिहेत्याकृतिमात्रमुच्यत इति चेन्न। अनावृत्तिशब्देनैव नित्यानावृत्त्यर्थ
स्य प्रतीतत्वादाकृतिकल्पनानर्थिका। तदिममिहेति च विशेषणार्थवत्त्वायान्यत्रावृत्तिः कल्पनीया न च सदेकमेवाद्वि
तीयमित्येवं प्रत्ययवतां मूर्धन्यनाड्यार्चिरादिमार्गेण गमनं॥ ब्रह्मैव सन्ब्रह्माप्येतीति तस्मात्तत्सर्वमभवन्न तस्य प्रा
णा उत्क्रामन्त्यत्रैव समवनीयन्त इत्यादिश्रुतिभ्यश्च। तस्माज्जीवादुत्क्रमिष्योः प्राणा नोत्क्रामन्ति सहैव गच्छन्तीत्य
र्थः कल्प्यत इति चेन्नात्रैव समवनीयन्त इति विशेषणानर्थक्यात्। सर्वे प्राणा अनूत्क्रामन्तीति च प्राणैर्गमनस्य प्राप्तत्वादु
त्क्रामतीत्यनाशंकैवैषा॥ यदापि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जीवेन सहागमनमाशंक्य तस्मान्नोत्क्रा
मन्तीत्युच्यते तदाप्यत्रैव समवनीयन्त इति विशेषणमनर्थकं स्यान्न च प्राणैर्वियुक्तस्य गतिरुपपद्यते जीवत्वं वा॥ सर्वे

हगमनमित्याशंकायां न तस्मादित्यादिवाक्यमित्याशंक्याह॥ यदापीति॥ भवतु प्राणानामत्रैव समवलयस्तथापि जीवस्य गमनायत्त
ममृतत्वमित्याशंक्याह॥ न चेति॥ कस्मिन्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति।
श्रुतेरिति शेषः॥ किंच प्राणैर्वियुक्तस्य चिदात्मनो जीवत्वं नोपपद्यते प्राणोपाधिकस्यैव तस्य जीवशब्दवाच्यत्वादित्याह॥ जीवत्वं वे।
ति॥ उक्तमर्थं समर्थयते॥ सर्वगतत्वादिति॥ चिदात्मा हि कल्पनायामधिष्ठाने सन्निहितो निर्भागः सर्वस्यात्मा तस्मादग्नेर्विस्फुलिंगवज्जीवत्व

छां·भा·
१६

तस्याश्च प्राणवियोगे चिदात्मनो जीवत्वं गतिर्वा न शक्या कल्पयितुं॥ तस्मात्पूर्णत्वादिप्रतिपादकश्रुतीनां प्रमाणत्वादित्यर्थः सदात्मनः सर्वगत
स्य जीवात्मभेदकरणं न प्राणोपाधिकृतं किंतु स्वत एव तत्स्यांशो जीवस्तथा चाग्निविस्फुलिंगवत्तस्य गत्युपपत्तेरित्याशंक्याह॥ नचेति॥ निष्क
लं निष्क्रियं शांतमित्यादिश्रुतेरिति शेषः प्रकरणार्थमुपसंहरति॥ तस्मादिति॥ निर्गुणब्रह्मविदामप्राप्तिकामृतत्वस्य गमनादिनिरपेक्षत्वादि
तियावत् सगुणब्रह्मोपासकस्य सापेक्षममृतत्वमित्यत्र विशेषणश्रुतिमनुकूलयति॥ तदपराजितेति॥ आदिपदेन तदैरंमदीयः सोमसवन इत्या

अ·
५

निरवयवत्वात्प्राणसंबंधमात्रमेव ह्यग्निविस्फुलिंगवज्जीवत्वभेदकारणमित्यतस्तद्वियोगे जीवत्वं गतिर्वा न शक्या परिक
ल्पयितुं श्रुतयश्चात्र प्रमाणं॥ न च सतोऽणुरवयवः स्फुटितो जीवाख्यः सद्रूपं छिद्रीकुर्वन्गच्छतीति शक्यं कल्पयितुं॥ तस्मात्त
योर्ध्वमायन्नमृतत्वमेतीति सगुणब्रह्मोपासकस्य प्राणैः सह नाड्या गमनं सापेक्षमेव चामृतत्वं न साक्षान्मोक्ष इति ग
म्यते॥ तदपराजिता पूस्तदैरंमदीयं सर इत्याद्युक्तानेषामेव ब्रह्मलोक इति विशेषणात्॥ अतः पंचाग्निविदो गृहस्था ये च

ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षा

मेऽरण्ये वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धा तप इत्येवमाद्युपासते श्रद्दधानास्तप (ह्यान्
स्विनश्चेत्यर्थः॥ उपासनशब्दः तात्पर्यार्थः॥ इष्टापूर्तेदत्तमित्युपासत इति यद्वत्॥ श्रुत्यन्तराच्च सत्यं ब्रह्म हिरण्यगर्भा

दिरूपं ये तेषामेव ब्रह्मविदामेषु पूर्वोक्तविशेषगुणो ब्रह्मणः सत्याख्यस्य लोको नान्येषामकृतात्मनामिति विशेषदर्शनादमृतत्वं तेषां॥
तल्लोकनिवासिभिः समं सापेक्षमेवेति निर्धारितमित्यर्थः॥ ऊर्ध्वरेतसामाश्रममात्रनिष्ठानामपि ब्रह्मलोको लभ्यते गृहस्थानां पुनर्विदुषामे
वेत्युपपादयन्प्रकृतश्रुतिव्याख्यानमनुवर्तयति॥ अत इति॥ पूर्वोक्तपारिशेष्यादिवशादितियावत्॥ परिव्राजकाश्चेत्यमुख्यसंन्यासिनस्त्रि
दंडिनो गृह्यंते॥ मुख्यसंन्यासिनां ब्रह्मसंस्थोऽमृतत्वमेतीति पृथक्कृतत्वाच्छ्रद्धा सत्यमित्युपासन इति श्रुत्यंतरं पंचाग्निविदो गृहस्थाः स्वाश्र

राम
१६

सत्यंब्रह्मोपासकाश्चोभये सर्वे श्रद्धेनोच्यंते॥ चतुर्थेऽप्युपकोसलविद्यायां गतिव्याख्यानमतिवृत्तं तेन समानमर्चिषोऽहरित्यादिवाक्यव्याख्या-नं च॥ तथा च तन्न पृथक्कर्तव्यमित्याह॥ समानमिति॥ उत्तरमार्गव्याख्यानमुपसंहरति॥ एष इति॥ देवयानेन पथा बहिरंडादवस्थितं ब्रह्म गंतव्यमित्येके तान्प्रत्याह॥ नांडादिति॥ तत्र हेतुमाह॥ यदंतरेति॥ पितरं द्युलोकं मातरं च पृथिवीं मध्ये ह स्थिती अमृणवंताभ्यामिदं विश्वं कर्मज्ञानाधिकृतं गच्छतीति॥ न चांडाद्बहिरस्ति गतिद्वयमित्यर्थः॥ वेत्थ यदितोऽधि प्रजाः प्रयंत्यस्य प्रश्नस्य प्रतिवचनं देवयानोपदेशेन व्या-

सर्वेऽर्चिषमर्चिरभिमानिनीं देवतामभिसंभवंतीति प्रतिपद्यंते॥ समानमन्यच्च चतुर्थे गतिव्याख्यानेनैष देवयानः पंथा व्या-ख्यातः सत्यलोकावसानो नांडाद्बहिर्यदंतरा पितरं मातरं चेति मंत्रवर्णात्॥ अथेत्यर्थांतरप्रस्तावनार्थो य इमे गृहस्था ग्रामे ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थं॥ यथा वानप्रस्थपरिव्राजकानामरण्यविशेषणं गृहस्थेभ्यो

षड्ढेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमा-नवः स एनान्ब्रह्म गमयत्येष देवयानः पंथा इति॥ अथ य इमे ग्राम इष्टापूर्ते दत्तमि॥ ॥१॥ व्यावृत्त्यर्थं तद्वदिष्टापूर्ते इष्ट-मग्निहोत्रादि वैदिकं कर्म पूर्तं वापीकूपतडागारामादिकरणं दत्तं च बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तं॥ इत्येवं-विधं परिचरणपरित्राणाद्युपासते॥ इतिशब्दस्य ॥ ख्यानं संप्रति पितृयाणोपदेशेनापि ग्रामनिवासित्वाविशेषादित्याशंक्याह॥ ग्रा-म इतीति॥ सपत्नीको हि वासो ग्राम इत्युच्यते॥ न च सपत्नीकत्वमूर्ध्वरेतसां युक्तं॥ तथा च गृहस्थानामेव ग्रामविशेषणमसाधारणं॥ न च तद-नर्थकमूर्ध्वरेतोभ्यस्तेषां व्यावृत्त्यर्थत्वादित्यर्थः॥ तद्वदृष्टांतेन स्पष्टयति॥ यथेति॥ वेद्यंतर्भावव्यासेधार्थं बहिर्वेदीति विशेषणमादेः॥ दत्त-मिति॥ प्रतीकोपादानं पुनर्व्याख्यानस्यानुवाद इत्यपुनरुक्तिः॥ इतिशब्दार्थमाह॥ इत्येवंविधमिति॥ परिचरणं गुर्वादिशुश्रूषा परित्राणं रक्षणमादिपदं नित्यस्वाध्यायादिसंग्रहार्थं उपासते तात्पर्येणानुतिष्ठंतीति यावत्कथमिति शब्दस्य पर्यायोक्तार्थत्वमितिहस्योपाध्यायः कथयती

देवयानाधिकृतेभ्यः सकाशात् पितृयाणाधिकृतेषु विशेषांतरमाह ॥ नैतदिति ॥ अप्राप्तप्रतिषेधोयमिति शंकते ॥ कुत इति ॥ प्राप्तिं दर्शयन्नु-
त्तरमाह ॥ अस्ति हीति ॥ पूर्ववद्यथापूर्वं देवयानेन पथावयवेभ्योवयविनः संवत्सरस्य प्राप्तिस्तथेति यावत् ॥ अन्नशब्दस्य यथाश्रुतमर्थं गृही-



प्रकारदर्शनार्थत्वान्ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामाभिमुख्येन संभवंति प्रतिपद्यंते तया निर्वाहिता धूमाद्रा-
त्रिं रात्रिदेवतां रात्रेरपरपक्षदेवतामेव कृष्णपक्षाभिमानिनीमपरपक्षाद्यान्षण्मासान्दक्षिणां दिशमेति सविता तान्मासान्द-
क्षिणायनषण्मासाभिमानिनीर्देवताः प्रतिपद्यंत इत्यर्थः संघचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगात्ता-
स्तु नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवंति ॥ कुतः पुनः संवत्सरप्राप्तिप्रसंगो यतः प्रतिषिध्य-
ते ॥ अस्ति हि प्रसंगः संवत्सरस्यैकस्यावयवभूते दक्षिणोत्तरायणे तत्रार्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योवयविनः

त्युपासते ते धूममभिसंभवंति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सर-
मभिप्राप्नुवंति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयं-

संवत्सरस्य प्राप्तिरुक्ता अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि ॥ ति ॥
पूर्ववत्प्राप्तिरापन्ना यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवंतीति ॥ मासेभ्यः पितृलोकं पितृलोकादाकाशं आकाशा-
च्चन्द्रमसं कोसौ यस्तैः प्राप्यते चन्द्रमा य एष दृश्यतेंतरिक्षे सोमो राजा ब्राह्मणानां तदन्नं देवानां तं चन्द्रमसमन्नं देवा इंद्रादयो भक्ष-
यंत्यतस्ते धूमादिना गत्वा चंद्रभूताः कर्मिणो देवैर्भक्ष्यंते ॥ नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्यंते नैष दोषः ॥ अन्नमि-
त्युपकरणमात्रस्य विवक्षितत्वान्न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यंते किं तर्ह्युपकरणमात्रं देवानां भवंति ते स्त्रीपशुभृत्यादिवद्दृश्या

त्वा चोदयति ॥ नन्विति ॥ औपचारिकमर्थं गृहीत्वा परिहरति ॥ नैष इति ॥ वृद्धप्रयोगमंतरेण कथमुपकरणविषयोन्नशब्दो व्याख्यायते तत्राह ॥

भवतु कर्मिणां देवान्प्रत्युपकरणत्वं तथापि स्वयमुपभोगाभावादनर्थकमिष्टादिकरणमित्याशंक्याह ॥ न चेति ॥ अन्योपभोग्यानामपि स्वयंभोगस
त्वं तस्मादित्युच्यते ॥ तथापि तेषां मृतानामशरीरिणां कथमुपभोगः संभवतीत्याशंक्याह ॥ शरीरं चेति ॥ कथमपां चंद्रलोके देहारंभकत्वं तदाह ॥
तदुक्तमिति ॥ अपां सोमत्वमेवात्र प्रतीयते न तु कर्मिदेहारंभकत्वमित्याशंक्याह ॥ ता आप इति ॥ कर्मसमवायिनीनामपां कर्मापूर्वद्वारा यजमा
नदेहे प्रतिष्ठानां कथं द्युलोकप्रवेशादि संभवतीत्याशंक्याह ॥ अपां चेति ॥ भासितारब्धस्य शरीरस्य भोगायतनत्वं दर्शयति ॥ तदारब्धेनेति ॥ तदे

उपकरणे तु स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामित्यादिवन्न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति तस्मात्कर्मिणो दे
वानामुपभोग्या अपि संतः सुखिनो देवैः क्रीडंति शरीरं च तेषां सुखोपभोगयोग्यं चंद्रमंडल आप्यमारभ्यते ॥ तदुक्तं पुरस्ताच्छ्र
द्धाख्या आपो द्युलोकाग्नौ हुताः सोमो राजा संभवतीति ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चंद्रत्वमाप
न्नाः शरीराद्यारंभिका इष्टाद्युपासकानां भवंत्यंत्यायां च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन स

तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तंते ॥

होर्ध्वं यजमानमावेष्ट्य चंद्रमंडलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारंभिका भवंति ॥ तदारब्धेन च शरीरेणेष्टादिफल
मुपभुंजाना आसते ॥ यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः संपतंति येनेति संपातः कर्मणः क्षयो यावत्संपातं यावत्कर्मणः
क्षय इत्यर्थः ॥ तावत्तस्मिंश्चंद्रमंडल उषित्वाथानंतरमेतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तंते पुनर्निवर्तंत इति प्रयोगा
त्पूर्वमपि असकृच्चंद्रमंडलं गता निवृत्ताश्चासन्निति गम्यते ॥ तस्मादिह लोक इष्टादिकर्मोपचित्य चंद्रं गच्छंति तत्क्षये चाव
((र्तंते क्षणमात्रमपि

वाणामन्नमित्यादि व्याख्याय तस्मिन्नित्यादि व्याचष्टे ॥ यावदिति ॥ चंद्रलोकस्तच्छब्दार्थः यावत्संपातमुषित्वेति
श्रूयते कथमन्यथा व्याख्यायते तत्राह ॥ संपतंतीति ॥ पुनःशब्दप्रयोगस्य तात्पर्यमाह ॥ पुनरिति ॥ अथेत्यादिवाक्यार्थमुपसंहरति ॥ तस्मा

तच्चन्द्रपरामृष्टं हेतुमुपदर्शयति ॥ स्थितीति ॥ यथा दीपस्य स्नेहक्षये स्थितिनिमित्ताभावाद् स्थितिस्तथा चंद्रलोके स्थितिनिमित्तस्य
भुक्तस्य भोगेन क्षयात्तत्रास्थित्यसंभवादावृत्तिरेवेत्यर्थः ॥ नन्विन्द्रियवत्सु पानमुषित्वा तत्र विचारयति ॥ किंतत्रेति ॥ तस्य चंद्रमंडलप्रापक
स्यातिरिक्तस्य च सर्वस्य कर्मणः क्षये सतीति ॥ यावत्सावशेषोऽभुक्तात्कर्मणः सकाशादिति ॥ केनचित्कर्मणा सहितः सन्नित्यर्थः ॥
पक्षद्वयेऽपि फलं पृच्छति ॥ किं तत इति ॥ तत्राद्यं पक्षं पूर्वपक्षिमुखेन प्रतिक्षिप्तुं तावदाह ॥ यदीति ॥ तत्रैव दूषणांतरमाह ॥ तिष्ठ
त्विति ॥ चन्द्रमंडलस्य सम्यक् ॥ ततश्चन्द्रमंडलादित्येतदिहेत्येतल्लोकोक्तिः ॥ आदिपदं शुभाशुभकर्मानुसारि सर्वव्यापारसंग्रहार्थं ॥
न केवलं सर्वकर्मक्षयपक्षे श्रुतिरेव विरुध्यते किंतु स्मृतिश्चेत्याह ॥ तत इति ॥ चंद्रलोके भोक्तव्यस्य कर्मणः भोगेन क्षयादूर्ध्वं शेषेणानुप

स्थितिनिमित्तकर्मक्षयान्नेह क्षयादिव प्रदीपस्य ॥ किं तद्येन कर्मणा चंद्रमंडलमारूढास्तस्य सर्वस्य क्षये तस्मादव
रोहणं ॥ किं वा सावशेषस्येति ॥ किं ततः ॥ यदि सर्वस्यैव क्षयः कर्मणश्चंद्रमंडलस्थस्यैव मोक्षः प्राप्नोतीति ॥ तिष्ठतु तावत्त
त्रैव मोक्षः स्यान्नवेति तत आगतस्येह शारीरोपभोगादि न संभवति ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात् ॥ नन्विष्टापू
र्तदत्तव्यतिरेकेणापि मनुष्यलोके शारीरोपभोगनिमित्तानि कर्माण्यनेकानि संभवंति न चैतेषां चंद्रमंडल उपभोगोऽस्ति
ऽक्षीणानि तानि ॥ यन्निमित्तं चंद्रमंडलमारूढस्तान्येव क्षीणानीत्यविरोधः शेषशब्दश्च सर्वेषां कर्मत्वसामान्याद्विरुद्धः

भुक्तेन कर्मणा जन्म प्रतिपद्यत इत्यादिस्मृतिः सर्वकर्मक्षयपक्षे विरुध्यत इत्यर्थः ॥ सर्वकर्मक्षयपक्षे पूर्वपक्षिणाऽन्यथावादिना
प्रतिक्षिप्ते सावशेषपक्षमुत्तरवादी प्रतिपद्यते ॥ नन्विति ॥ तान्यपि चंद्रमंडले भुक्तान्येवेति नावशेषोऽस्तीत्याशंक्याह ॥ न चेति ॥ न हि सर्वकर्मवशा
च्चंद्रमंडलप्राप्तिरिति भावः ॥ न हि चंद्रमंडले कर्मफलोपभोगाभावात्तदारोहेणेत्याशंक्याह ॥ यन्निमित्तमिति ॥ अविरोधश्चंद्रमंडले भोगस्य
शेषकर्मसद्भावस्य चेति शेषः यत्तु ततः शेषेणेत्यादिस्मृतिविरोध इति तत्राह ॥ शेषशब्दश्चेति ॥ निःशेषमपि भुक्तेषु कर्मसु अभुक्तकर्मसु शेष
शब्दो न विरुध्यते ॥ अभुक्तानां कर्मणां कर्मत्वस्य तुल्यत्वान्नात्र सावशेषपक्षे स्मृतिविरोधोऽस्तीत्यर्थः ॥ यच्चंद्रमंडलस्थस्यैव मोक्षः स्यादितित

शेषकर्मसद्भावादेवेतियावदितश्चकर्मशेषसिद्धिरित्याह ॥ विरुद्धेति ॥ आरंभकत्वसंभवादेकजात्युपभोग्यकर्मक्षयेपिकर्मशेषःसंभवतीति
शेषः ॥ अथैकस्मिन्जन्मनिसर्वाणिक्षीयंतेकर्माशयस्यैकभविकत्वादित्याशंक्याह ॥ नचेति ॥ एकभविकन्यायस्योपरिष्टान्निराकरिष्यमाण
त्वादित्यर्थः इतश्चशेषकर्मसिद्धिरित्याह ॥ ब्रह्महत्यादेश्चेति ॥ श्वसूकरखरोष्ट्राणामित्यादिस्मरणं ॥ घृतभांडस्नेहशेषवद्भुक्तस्यैवकर्मणःशे
षात्पुनरावृत्तिर्भविष्यतीत्यत आह ॥ स्थावरादीति ॥ शेषकर्मसिद्धौहेत्वंतरमाह ॥ गर्भसंभूतानामिति ॥ कर्मशेषसद्भावमुपसंहरति ॥ तस्मा
दिति ॥ एकस्यापिकर्मणोऽनेकजन्महेतुत्वेनचक्रवदित्यर्थः ॥ मतांतरमुत्थापयति ॥ यत्त्विति ॥ यावत्प्रवृत्तफलंकर्मनक्षीयतेतावत्तद्वृत्तिप्रतिबं
धादन्यानिकर्माणिस्वफलंनारभंतेमरणकालेतुप्रतिबंधकाभावात्सर्वकर्माशयसंघातोपमर्देनतेषामुत्तरशरीरारंभकत्वमविरुद्धमित्य

चतत्रैवमोक्षःस्यादितिदोषाभावोविरुद्धानेकयोन्युपभोगफलानांचकर्मणामेकैकस्यजंतोरारंभकत्वसंभवान्नचैक
स्मिन्जन्मनिसर्वकर्मक्षयःउपपद्यते ॥ ब्रह्महत्यादेश्चैकैकस्यकर्मणोऽनेकजन्मारंभकत्वस्मरणात् ॥ स्थावरादिप्राप्ता
नांचात्यंतमूढानामुत्कर्षहेतोःकर्मणआरंभकत्वासंभवाद्गर्भसंभूतानांचवर्तमानानांकर्मासंभवेसंसारानुपपत्तिस्त
स्मान्नैकस्मिन्जन्मनिसर्वेषांकर्मणामुपभोगोयत्तुकैश्चिदुच्यतेसर्वकर्माशयोपमर्देनप्रायेणकर्मणांजन्मारंभकत्वंतत्रका
निचित्कर्माण्यनारंभकत्वेनैवतिष्ठंतिकानिचिज्जन्मारभंतइतिनोपपद्यते ॥ मरणस्यसर्वकर्माभिव्यंजकत्वात्स्वगोचराभि
व्यंजकप्रदीपवदितितदसत्सर्वस्यसर्वात्मकत्वाभ्युपगमान्नहिसर्वस्य ((र्थः ॥ तथापिकथंशेषकर्मसद्भावासिद्धिरित्यतआह ॥ तत्रे

ति ॥ अनारब्धकर्मणांसर्वेषामुत्तरशरीरारंभकत्वेसतीतियावत्प्रयाणकालेयानिकर्माण्यभिव्यक्तानितान्येवोत्तरशरीरारंभकाणिइत
रेषांतुनशरीरारंभकत्वमितिदूषयति ॥ तदसदिति ॥ मधुब्राह्मणोक्तेनन्यायेनसर्वस्यसर्वात्मकत्वांगीकाराद्देहस्यापितथात्वात्सर्वात्मनो
पमर्दोपपत्तिरित्यर्थः ॥ उक्तमर्थमुपपादयितुंसामान्यन्यायमाह ॥ नहीति ॥ सर्वंसर्वस्यकारणंकार्यंचेतिन्यायेनसर्वस्यसर्वात्मकत्वेस्थितेपी
तिकस्यचित्क्वचित्सर्वात्मनोपमर्दः तथाभिव्यक्तिर्वानोपपद्यते ॥ प्रतीयमानोपमर्दस्तुदेशविशेषादिकृतत्वादित्यर्थः ॥ उक्तन्यायप्रक्रमेणे

॥ तथेति ॥ इतश्च कर्मशेषः संभवतीति क्रमवत्तायां दृष्टान्तमाह ॥ यथा चेति ॥ पूर्वक्रमेणानुभूतानि यानि मनुष्यादीनि जन्मानि तैरभि-
संस्कृताः संपादिताः विरुद्धा या भूयस्यो वासनास्ता नातिविशेषप्रापकेण कर्मणोऽस्मिन्नारभ्यमाणेन निरुध्यन्त इत्यर्थः ॥ दार्ष्टान्तिकमाह
॥ तथेति ॥ दृष्टान्तं विवृणोति ॥ यदि हीति ॥ व्यवहितवासनोच्छेदेपि नाव्यवहितदेशोच्छित्तिस्तेन तथा चानन्तरजन्मान्त्या वासना सामान्येन
मर्कटशिशोर्यथोक्तं कौशलमविरुद्धमित्याशंक्याह ॥ न चेति ॥ किं च पूर्वप्रज्ञा चेत्यविशेषेण पूर्वजन्मार्जितवासना जीवमनुगच्छति

सर्वात्मकत्वे देशकालनिमित्तावरुद्धत्वात्सर्वात्मनो पमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनो पपद्यते ॥
तथा कर्मणामपि साश्रयाणामुपमर्दोऽभिव्यक्तिश्च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृता विरुद्धा-
नेकवासना मर्कटत्वप्रापकेन कर्मणा मर्कटजन्मारभमाणेन नोपमृद्यन्ते ॥ तथा कर्माण्यप्यन्यजन्मप्राप्तिनिमित्ता-
नि नोपमृद्यन्त इति युक्तं ॥ यदि हि सर्वाः पूर्वजन्मानुभववासना उपमृद्येरन्मर्कटादिजन्मनिमित्तेन कर्मणा मर्कटज-
न्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखान्तरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति इहज-
न्मन्यनभ्यस्तत्वात् न चातीतानन्तरजन्मनि मर्कटत्वमेवासीत्तस्येति शक्यं वक्तुं तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा
चेति श्रुतेस्तस्माद्वासनावन्नाशेषकर्मोपमर्द इति शेषकर्मसंभवः यत एवं तस्माच्छेषेणोपयुक्तात्कर्मणः संसार उपप-
द्यत इति न कश्चिद्विरोधः ॥ कोसावध्वा यं प्रति निवर्तनं तदुच्यते ॥ यथेतं यथागतं निवर्तन्ते ॥ ननु मासेभ्यः पितृलोकं पि-
तृलोकादाकाशमाकाशाच्चन्द्रमसमिति गमनक्रम उक्तो न तथा निवृत्तिः किं तर्ह्याकाशाद्वायुमित्यादि कथं यथेतमित्यु-

ति श्रवणादव्यवहितपूर्वजन्मवासनैवानुमन्वेतीति न शक्यं विशेषतो वक्तुमित्याह ॥ तं विद्येति ॥ दृष्टान्तमुपपाद्य दार्ष्टान्तिकं निगमय-
ति ॥ तस्मादिति ॥ शेषकर्मसद्भावफलितमाह ॥ यत इति ॥ उपयुक्तात्कर्मणः शेषेणेति संबन्धः ॥ कश्चिदिति ॥ श्रौतो वा स्मार्तो वा यौक्तिको
वा लौकिको वा इत्यर्थः ॥ एतमेवाध्वानमिति प्रकृतमध्वानं प्रश्नपूर्वकं विशदयति ॥ कोसावित्यादिना ॥ यथेतमित्युक्तमाक्षिपति ॥ नन्वि

च्यते ॥
ति ॥ किं यथेतमित्येतदेव न संभवति किं वाऽय-
थेतमेव नियमो नोपपद्यते तत्राद्यं दूषयति ॥

॥नैषदोषइति॥द्वितीयंप्रत्याह॥नचेति॥अत्रेति निवृत्तिकृत्ता॥अनेवंविधमपीति॥यथागतिक्रमोदर्शितोनतथानिवृत्तिर्नियता किंतुवि
धांतरेणापिसंभवतीत्यर्थः।निवृत्तेः क्रमनियमाभावेकीदृशोनियमोविवक्षितइत्याशंक्याह॥पुनरिति॥येनाभिमर्येणतर्हियथेतमित्युक्त
मतआह॥अतइति॥गतिक्रमवन्निवृत्तिक्रमेनियमाभावोऽतःशब्दार्थः॥उक्तंचयथेतमनेवंचेतिनिवृत्तिनियमेफलितमाह॥अतइति॥पर
मात्मानंव्यावर्तयितुं भौतिकमित्युक्तं॥कथंपूर्वसिद्धाकाशतादात्म्यापत्तिरवरोहतांसिध्यतीत्याशंक्यतत्सामीप्यगमनमेवतद्भावापत्तिरित्युप

नैषदोषः॥आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च॥नचात्रयथेतमेवेतिनियमः॥नेवंविधमपिनिवर्तंते॥पुनर्निवर्तंतइ-
तितुनियमो तदुपलक्षणार्थमेतद्यथेतमित्यतोभौतिकमाकाशंतावत्प्रतिपद्यंते॥यास्तेषांचंद्रमंडलेशरीरारंभकाआपअ-
संस्तास्तेषांतत्रोपभोगनिमित्तानांकर्मणांक्षयेविलीयंते॥घृतसंस्थानमिवाग्निसंयोगेताविलीनाअंतरिक्षस्थाआकाशभू-

यथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाऽभ्रंभवत्यभ्रंभूत्वामेघोभवतिमेघोभूत्वा

ताइवसूक्ष्माभवंति॥ताअंतरिक्षाद्वायुर्भवंतिवायुप्रतिष्ठावायुभूताइतश्चामुतश्चोह्यमानाःताभिः ((प्रवर्षति॥५॥
सहक्षीणकर्मावायुभूतोभवति॥वायुर्भूत्वाताभिःसहैवधूमोभवति॥धूमोभूत्वाऽभ्रमब्भरणमात्ररूपोभवत्यभ्रंभूत्वा
ततःसेचनसमर्थोमेघोभवति॥मेघोभूत्वाउन्नतेषुप्रदेशेष्वथप्रवर्षतिवर्षधारारूपेणपातकर्मापततीत्यर्थः॥तइहव्री
हियवाओषधिवनस्पतयस्तिलमाषाइत्येवंप्रकाराजायंतेक्षीणकर्मणांअनेकत्वाद्बहुवचननिर्देशो ((न्वर्पतेस्वाभाव्याप-

त्तिरितिन्यायादित्याह॥यास्तेषामिति॥घृतस्यसंस्थानंकाठिन्यंतास्वाकाशभूतासुतत्परिवेष्टिताःकर्मिणोऽवरोहंतस्तद्भूताइवभवंतीत्य
र्थः॥आकाशाद्वायुमित्युक्त्यार्थंसाधयति॥ताअंतरिक्षादिति॥उन्नतेषुसमुद्रादिव्यतिरिक्तेषुप्रदेशेष्वितियावत्॥तइत्यनुशयिनोनिर्दिश्यं
ते॥व्रीहीति॥पृथिवीकथ्यतेकथमस्मिन्वाक्येबहुवचनेनानुशयिनांबहुत्वंनिर्देशःकृतइत्यर्थः॥कथंतर्हिमेघोभूत्वाप्रवर्षतीत्यादावेकवच

मेघादिष्विति॥ येपूर्वं मेघादयो नभोन्तास्ते प्रत्येकमभिमानिदेवतानामेकरूपत्वात्तदुपश्लिष्टानामनुशायिनामप्येकवचनेन निर्देशो यु
क्त इत्यर्थः॥ अतो वै खल्वित्यादिवाक्यं व्याचष्टे॥ यस्मादिति॥ अनुशायिनां दुःखं निःसरणमित्युक्तमुपपादयति॥ यत इत्यादिना॥ मकरा
दिभिर्भक्षितानामनुशायिनां तेभ्यस्तत्समानजातीयत्वेन समुद्भवो भविष्यतीति चेन्नेत्याह॥ तेपीति॥ मकरादयोपि जलचारिभिरन्यैर्भक्ष्यं
ते तथा च समुद्रे पतितानामनुशायिनां तत्रैव लयः स्यादित्यर्थः॥ नन्वेवमनुशायिनः समुद्रे लीना न ततः पुनरूर्ध्वं गन्तुं शक्यं तेन तयाचक्षते

मेघादिषु पूर्वेष्वेकरूपत्वादेकवचननिर्देशो यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशसन्निवेशाः सहस्रशो हि वर्षधा
राभिः पतितानामतस्तस्माद्वै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम्॥ यतो गिरितटादुदकस्रोतसोह्यमाना नदीः
प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते तेप्यन्येन तत्रैव च मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः
पुनर्वर्षधाराभिर्मरुदेशे शिलातटेऽगम्येषु पतिताः तिष्ठन्ति कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैस्तेप्यन्यैरित्येवम

त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं॥

कारः परिवर्तेरन्॥ कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन् भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो
दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वं॥ अथवातोऽस्माद्व्रीहियवादि

((विनाशः स्यादित्याशंक्याह॥ जलध
रैरिति॥ समुद्राम्भोभिरिति तृतीया सप्तम्यर्थे॥ ननु हिंस्रपश्वाद्युपभुक्तानामनुशायिनां तत्समानजातीयदेहभोगः स्यादिति चेन्नेत्याह
॥ भक्षिताश्चेति॥ ये हि सर्पादयो भक्ष्यन्ते तेभ्यस्तत्समानजातीयत्वेनानुशायिनामुद्भवः स्यादिति चेन्नेत्याह॥ तेपीति॥ तथापि यथो
क्तरीत्या परिवर्तनात्तीरे तेऽभक्ष्यग्रामपि पदाकदाचित्सम्पद्येरन्निति चेन्नेत्याह॥ कदाचिदिति॥ तथापि भक्ष्येषु जातानां रेतःसिग्योगः
सुलभः स्यादिति चेन्नेत्याह॥ भक्ष्येष्वपीति॥ दुर्निशब्दो यतःशब्देन पूर्वेण संबध्यते॥ पूर्वमतःशब्दो हेतुपरतया व्याख्यातः संप्रति वीप्सा

दुर्निष्प्रपततरमिति तकारसहितपाठे सति विवक्षितमर्थमाह ॥ ब्रीहियवादीति ॥ तत्र हेतुमाह ॥ यस्मादिति ॥ तद्धि तेषामन्तराले विशीर्णा
नां देहभागित्वाभावादनुशयैर्वैपक्ष्यमित्याशंक्याह ॥ कदाचिदिति ॥ काकतालीययाद्यच्छिकन्यायेनेति यावत् ॥ अनुशया
स्वस्य कर्मणो भाविदेहारंभार्थत्वात्स्वस्य सम्भवपूर्वकं विवृणोति ॥ कथमित्यादिना ॥ अनुशयिनो रेतःसिगाकारभाक्त्वे हेतुमाह ॥ रेत
स इति ॥ तस्य रेतःसिगाकृत्यात्तद्देशेन भावितत्वात्संस्कृतत्वात्तद्देशसंभूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भ

भावाद्दुर्निष्प्रपततरं दुर्निर्गमनतरं दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः ॥ ब्रीहियवादिभावो दुर्निष्प्रपततर
स्तस्मादपि दुर्निष्प्रपततराद्रेतःसिग्देहसंबन्धो दुर्निष्प्रपततर इत्यर्थः यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थवि
रैर्वा भक्षिता अन्तराले शीर्यन्ते अनेकत्वादन्नादानां ॥ कदाचित्काकतालीयवद्रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतः
सिग्भावं गतानां कर्मणो वृत्तिलाभः कथं यो यो ह्यन्नमत्ति अनुशयिभिः संश्लिष्टं रेतःसिग्यश्च रेतः सिञ्चत्यृतुकाले यो

यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥

षिति तद्भूय एव तदाकृतिरेव भवति रेतोरूपेण योषिद्गर्भाशये प्रविष्टोऽनुशयी रेतसो रेतःसिगाकृतिभावितत्वात्
सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमिति श्रुत्यन्तरादतो रेतःसिगाकृतिरेव भवतीत्यर्थः ॥ तथा हि पुरुषात्पुरुषो जायते गोर्गवाकृति
रेव न जात्यन्तराकृतिस्तस्मायुक्तं तद्भूय एव भवतीति ॥ ये त्वन्ये तु ((वतीत्यर्थः रेतसो रेतःसिग्गसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह ॥
सर्वेभ्य इति ॥ रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकारत्वमयुक्तं निगमयति ॥ अत इति ॥ अनुशयिनो रेतःसिगाकारत्वे लौकिकानुभवमनु
कूलयति ॥ तथेति ॥ चन्द्रस्थलस्खलितानामवरोहतां ब्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभस्तत्र हि ब्रीह्यादिदेहाभि
मानिनामपि दुःशकं निष्क्रमणं ब्रीह्यादिदेहसंबंधाविशेषादित्यनेनाह ॥ ये त्विति ॥ \ ॥ ७ ॥ \ ॥ ७ ॥ \ ॥ ७ ॥

व्रीह्यादिदेहसंबंधाविशेषेऽकृतत्वाद्देहभाजां ततो निःसरणमशक्यं न भवतीत्याशंक्य विशेषमाह ॥ कस्मादित्यादिना ॥ शारीरजैः कर्म
दोषैर्याति स्थावरतां नर इत्यादिस्मृतिस्मृत्योर्येषां कर्मनिमित्तं स्थावरजन्म तेषां कर्मक्षय एवावधिरवरोहतां तु कर्मासंकीर्तनाद्देवप्य-
मित्यर्थः ॥ यथा जलूका तृणात्तृणांतरं दीर्घभूता संक्रमते न तथानुशयिनो व्रीह्यादिदेहभाजोऽपि तत्त्यागेन देहांतरं गच्छंत ततोऽपि पयवि
ज्ञानवंत एव न गच्छंतीत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति ॥ सविज्ञान इति ॥ अथोपसंहृतकरणानां विज्ञाने कारणासंभवात्कथं सवि
ज्ञानत्वमित्याह ॥ यद्यपीति ॥ स्वकारणाभावेऽप्यदृष्टमेवैकं वासनात्मकं ज्ञानोत्पत्तौ निमित्तमिति तेन सविज्ञाना एव गच्छंति देहांतरमि
त्यत्र हेतुमाह ॥ श्रुतिप्रामाण्यादिति ॥ श्रुतिरत्र बृहदारण्यकश्रुतिः ॥ यथा सविज्ञानानामेव व्रीह्यादिदेहांतरगमनं न तथाज्ञानिनामपि ॥

पि स्थावरमंडलमनारुह्यैहैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यंते पुनर्मनुष्यादिभावं तेषां नानुशयिनामिव दु
र्निष्प्रपतत्वं कस्मात्कर्मणा हि ते व्रीहियवादिदेहमुपात्ताः तदुपभोगनिमित्तक्षये व्रीह्यादिस्तंबदेहविनाशे यथाकर्मार्जि
तं देहांतरं जलूकावत्संक्रमंते सविज्ञाना भवंति सविज्ञानमेवान्ववक्रामतीति श्रुत्यंतरात् यद्यपि संहृतकरणाः संतो
देहांतरं गच्छंति तथापि स्वप्नवद्देहांतरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहांतरं गच्छंति ॥ श्रुतिप्रा
माण्यात्तथावरोहादिना च गमनं स्वप्नवदुद्भूतविज्ञानेन सस्थवर्जितकर्मनिमित्तत्वाद्गमनस्य न तथानुशयिनां व्रीह्यादि
भावेन जातानां सविज्ञानमेव चेतः सिगमेऽपि देहसंबंध उपपद्यते न हि व्रीह्यादिलवनकंडनपेषणादौ च सविज्ञानानां



रोहादिना कर्मिणां धूमादिना च गमनं स्वप्नवदुद्भूतवासनात्मकविज्ञानेन सविज्ञानानामेवेत्याह ॥ नत्वेति ॥ तेषां सविज्ञानत्वे हेतुमाह ॥ लब्ध
वृत्तीति ॥ अनुशयिनामपि न हि व्रीह्यादिषु संश्लिष्टानां रेतःसिगादिदेहसंबंधः सविज्ञानानामिवेति चेन्नेत्याह ॥ न तथेति ॥ अनुपपन्नो हे
तुमाह ॥ नहीति ॥ व्रीह्यादिसंश्लिष्टानामनुशयिनां सविज्ञानत्वेन लवनादौ तज्जीवनत्तेषामपि मचासुप्रसंगान्न रेतःसिग्देहसंबंधः सिध्ये
दित्यर्थः ॥ व्रीह्यादिषु देहांतरं गच्छत्सु विज्ञानत्वोपलंभादनुशयिष्वपि देहांतरप्राप्तेरविशेषात्तुल्यं सविज्ञानत्वमिति शंकते ॥ ० ॥

॥नन्विति॥तृणात्तृणांतरं प्रति जलूकागमनवदवरोहतामपि देहांतरं प्रतिगमनस्य तुल्यत्वाद्व्रीह्यादिवद्गुल्मासविज्ञानतेति योजना॥अ-
स्तु तेषां सविज्ञानत्वं का हानिरित्यत आह॥तथा च सतीति॥इष्टादिकारिणामंतराले नरकानुभवे॥तथा च सति तदनुष्ठानस्यानर्थार्थ-
विहितत्वे श्रेयःसाधनविषयं कर्मकांडं विरुध्येतेत्याह॥श्रुतेश्चेति॥ यद्यपि बुद्धिपूर्वकं वृक्षमारोहतां सविज्ञानत्वेपि तस्मादबुद्धिपूर्वं पत-
नात्सविज्ञानत्वं विज्ञायते तथा चंद्रमंडलमारोहतां सविज्ञानत्वेपि ततोवरोहतां नैवं तदस्त्युद्भूतकर्माभावादित्यारोहावरोहयोर्ज्ञानविशे-
षसंभवान्नैवमिति परिहरति॥नवृक्षेति॥संग्रहवाक्यं विवृणोति॥देहादित्यादिना॥चकारो ह्यच्छतोपि सविज्ञानत्वं भवेदिति संबंधः॥

ननु चंद्रमंडलादप्यवरोहतां देहांतरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानतैव युक्ता॥ तथा च सति घोरनरकानु-
भवदृष्टापूर्त्तादिकारिणां चंद्रमंडलत्वादारभ्य प्राप्तोत्याव ब्राह्मणादिजन्म तथा च सत्यनर्थायेष्टापूर्त्तादुपासनं विहि-
तं स्यात्तु ते श्रुतेश्च प्रामाण्यमाप्तं वैदिकानां कर्मणामनर्थानुबंधित्वात्॥ न वृक्षारोहणपतनवद्विशेषसंभवात्। इह देहांतरं प्र-
ति पित्सोः कर्मणो लब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तं वृक्षाग्रमारोहत इव फलं जिघृक्षोस्तथा वि-
रादिना गच्छतां सविज्ञानत्वं भवेद्धूमादिना च चंद्रमंडलमारुरुक्षतां॥ न तथा चंद्रमंडलादवरुरुक्षतां वृक्षाग्रादिव पततां।
तां सचेतनत्वं यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशांतरं नीय-
मानानां ज्ञानशून्यता दृष्टा तथा चंद्रमंडलान्मानुषादिदेहांतरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयान्मूर्छितदेहानां॥

अवरोहतां जीवानां सर्वथा विज्ञानशून्यत्वमयुक्तं॥ तेषां चैतन्यस्वाभाव्यादुत्पततामपि विज्ञानमात्रमस्त्येवेत्याशंक्योदाहरणांतर-
माह॥यथा चेति॥तेन मुद्गरादिना योभिघातस्तेन हेतुना या वेदना तन्निमित्तेन संमूर्छितानि संवृत्तानि प्रतिबद्धानि वा करणानि येषां
तेषामिति यावन्मूर्छितोभिनष्टो देहात्तमयः स्थूलो देहो येषां तेषां॥ न त एवमिति बद्धकरणानां युक्ता विज्ञानशून्यतेति संबंधः॥ यथो-
क्तदृष्टांतवशाच्चंद्रमंडलादवरोहन्तो विज्ञानशून्याः सिध्यंतीति निगमयति॥ अत इति॥ तथापि मूर्छितानां स्थूलदेहसद्भावादेशं

अवरोहतांत्वनुतदभावे कथं व्रीह्यादिभावः संभवतीत्यत आह ॥ अपरित्यक्तेति ॥ न परित्यक्तं देहभावस्य बीजं कर्मापूर्वं याभिरद्भिस्ताभिः परिहिता जीवा मूर्च्छितवद्विज्ञानशून्या गगनादिक्रमेण पृथिवीं प्राप्य कर्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति संबन्धः स्थावरदेहसंबन्धित्वात्तद्गतजीववत्तदा सविज्ञानत्वं संभवतीत्याशङ्क्याह ॥ प्रतिबद्धेति ॥ व्रीह्यादिसंश्लेषावस्थायामनुशयिनां कर्मणोऽनुद्भूतवृत्तित्वात्करणानां च तत्र वृत्तिलाभाभावादनुद्भूतविज्ञानत्वमुक्तमित्यर्थः ॥ न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं किंतु व्रीह्यादेर्लवनादिकालेऽपीत्याह ॥ तथेति ॥ पाकसंस्कारैः रसादीन्यादिशब्देन शोणितमांसमेदोऽस्थिमज्जारेतांस्युच्यन्ते ॥ तस्मिन्काले मूर्च्छितवदनुद्भूतविज्ञानत्वे देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तद्दृष्टमेवेति हेतुमाह ॥ देहेति ॥ अलब्धवृत्तित्वादि ति च्छेदः ॥ कथं पुनरनुशयिनां ।

प्रतिबद्धकरणानामनुशयिनामेतेऽपरित्यक्तदेहबीजभूताभिरद्भिर्मूर्च्छितानां वाय्वाकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयानुद्भूतविज्ञाना एव ॥ तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्च्छितवदेव देहारम्भकस्य कर्मणोऽलब्धवृत्तित्वात् ॥ देहबीजभूतापसंबन्धापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावत्त्वं न विरुध्यतेऽन्तराले त्वविज्ञानं मूर्च्छितवदेवेत्यदोषः ॥

विज्ञानशून्यत्वे तद्यथा तृणजलौका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरतीत्यादौ सचेतना जलूकादृष्टान्तत्वेनोपादीयते तत्राह ॥ देहबीजभूतेति ॥ सर्वास्ववस्थासु तासु तासु व्रीह्यादिसंश्लेषलवनादिरूपास्विति यावत् ॥ न चेतनावत्त्वं जलूकादृष्टान्ते विवक्षितं किंतु सातत्यमात्रमिति भावः ॥ जलूकावत्त्वं जलूकासादृश्यं अनुशयिनामित्यर्थः ॥ आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्यमित्युपपाद्यारोहतामपि यावत्स्वस्थानेभ्यः करणान्युपसंहृत्य देहस्थैवस्थानं तावदेव सविज्ञानत्वं ॥ न देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्यनुशयिनां तु चन्द्रमण्डलादवरुरुक्षतामपि न भाविदेहपर्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह ॥ अंतराले त्विति ॥ चन्द्रमण्डलादवरोहतां देहान्तरगमनस्य तुल्यत्वेऽपि विज्ञानशून्यत्वमदुष्टमित्युपसंहरति ॥ इत्यदोष इति ॥ यत्तु हिंसानुग्रहात्मत्वादिष्टादिकर्मणां स्थावरत्वमपि तत्फलमेव ॥ तथा चैवैदिकानां कर्मणामन ।

॥नचेति॥ उभयहेतुत्वमर्थानर्थहेतुत्वमितियावत्॥ अहिंसन्नित्यादिश्रुतेः शास्त्रचोदितवैदिकेषु कर्मसु हिंसा नानर्थहेतुरित्याह॥ अ
भ्युपगतेपीति॥ यद्यपि स्वरूपेण हिंसानर्थहेतुरभ्युपगम्यते तथापि तद्युक्तानां वैदिककर्मणां नानर्थारम्भकत्वं॥ यथा स्वरूपेण वि
षदध्यादेर्मरणज्वरादिहेतुत्वेपि मंत्रशर्करादिभिः सहोपयुक्तस्य तत्कार्यानारंभकत्वं॥ तथा हिंसायाः स्वतः धर्महेतुत्वेपि वैदिककर्मनि
ष्ठायाः न तद्धेतुत्वं वैदिकैरेव कर्मभिस्तत्कृतदोषापनयनेन सिद्धिरित्यर्थः पूर्वोक्तमेव दृष्टांतं स्पष्टयति॥ मंत्रेणेति॥ तेन सहोपयुक्तस्य विष

नच वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुं हिंसायाः शास्त्रचोदितत्वात् अहिंसन्सर्वभूतान्यन्य
त्रतीर्थेभ्य इति श्रुतेः शास्त्रचोदितायाः हिंसायाः नाधर्महेतुत्वमभ्युपगम्यते॥ अभ्युपगतेपि अधर्महेतुत्वे मंत्रैर्विषा
दिवत्तदपनयोपपत्तेर्न दुःखकार्यारंभकत्वोपपत्तिर्वैदिकानां कर्मणां मंत्रेणेव विषभक्षणस्येति॥ तत्तत्र तेष्वनुशयिनां य

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं।

इह लोके रमणीयं शोभनं चरणं येषां ते रमणीयचरणाः रमणीयचरणेनोपलक्षितः शोभनोनुशयः पुण्यं कर्म येषां ते र
मणीयचरणा उच्यंते॥ क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावस्तेनानुशयेन पुण्येन कर्म
णा चन्द्रमंडले भुक्तशेषेणाभ्याशो ह क्षिप्रं यदिति क्रियाविशेषणं ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन्प्राप्नुयुः

स्यानर्थहेतुत्वेन पुष्टिहेतुत्ववद्वैदिककर्मानुप्रविष्टाया हिंसायाः पुरुषार्थत्वमेवासिद्धमिति चेन्न शब्दादित्यादित्यर्थः॥ न
न्वयमेवं भवतीत्यत्र प्रसंगागतं परिसमाप्य प्रकृतं श्रुतिव्याख्यानमनुवर्तयति॥ तत्रेति॥ अन्याधिष्ठितपूर्ववदभिलापादित्यन्या
यं न तेषु व्रीह्यादिषु संश्लिष्टायेनुशयिनस्तेषामयं केचिदस्मिंल्लोके चंद्रमंडलप्राप्तेः प्रागवस्थायामनुष्ठिताः भुक्त रमणीयचर
णास्ते रमणीयां योनिमापद्येरन्निति संबंधः उक्तमेव स्पष्टयति॥ शोभनमिति॥ कथं रमणीयचरणानुरोधेन शोभनानुशयो लक्ष्ये

नेस्वल्पत्वनुशयिनो रेतःसिग्योगानंतरं तेन कर्मणा रमणीयां योनिमापद्येरन्निति यत्तत्क्षिप्रमेवेति योजना ॥ योनिविकल्पे हेतुमाह ॥
स्वकर्मेति ॥ अथेति प्रतीकं गृहीत्वा व्याचष्टे ॥ पुनरिति ॥ तद्विपरीतास्तेभ्यो रमणीयचरणेभ्यो विलक्षणा इति यावत्ते कपूयां योनिमशु
भाशयवशात्तेः सिग्योगानंतरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना ॥ तत्रापि विकल्पे कारणमाह ॥ स्वकर्मेति ॥ तृतीयपंथा
नमवतारयितुं पूर्वोक्तौ पंथानौ संक्षिप्यानुवदति ॥ ये त्विति ॥ शुभानुशयवशात्केचिद्ब्राह्मणादियोनिमापन्नास्ते स्वस्ववर्णाश्रम

ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण । अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणो
ऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन्कपूयामेव धर्मसंबंधवर्जितां जुगुप्सितां योनिमापद्येरन् ॥
श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वा ॥ स्वकर्मानुरूपेणैव ॥ ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टादिकारि

वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वाथैतयोः

णस्ते धूमादिना गच्छंत्यागच्छंति च पुनः पुनर्घटीयंत्रवद्विद्यां चेत्प्राप्नुयुस्तदार्चिरादिना गच्छंति । (पथोर्न कतरेण चन ता
ति ॥ यदा तु न विद्यासेविनो नापीष्टादिकर्मसेविनस्तदा तयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण च
नापि नयंति तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवंत्यत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायं

विहितकर्मनिष्ठाः संतो यदिष्टादिकर्म कृतवंतस्तदा दक्षिणेन पथा चंद्रं गच्छंति तत्र च भोक्तव्ये कर्मणि भोगेन क्षीणे पुनरवशिष्टेन कर्मणा
पृथिवीमागच्छंत्येवं घटीयंत्रवत्पुनः पुनः आरोहंत्यवरोहंतश्च केवलकर्मिणो दृश्यंते च द्विजातयः स्वकर्मस्थाः संतो ध्यानं लभेरंस्तदोत्तरे
णयानेनेतो ब्रह्मलोकं गच्छंतीत्यर्थः ॥ इदानीं तृतीयस्थानमुपदिशति ॥ यदा त्विति ॥ पौनःपुन्येन लोपमध्यमैकवचनं ॥ तयोः सर्वो
स्वपि तिषु विधानात्पुनः पुनर्जायंते म्रियंते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह ॥ ८ ॥ ७ ॥ ५ । ७ ॥ ८ ॥

तथापि विषयविषयिभावेन भेदाभावान्नद्वैतस्यापुरुषार्थत्वमिति शंकते। नन्विति। भेदो न पुरुषार्थत्वोपयोगी केवलव्यतिरेकाभावात् सुख साक्षात्कारस्तु पुरुषार्थः स चाभेदेऽपि विद्यत इत्याशंक्याह। स्वरूपेणेति। आत्मनि विशेषज्ञानरहितं यद्द्रष्टृस्वरूपं तदिष्टमित्यत्र हेतुमाह। नाहेति किं तर्हि द्रष्टृस्वरूपमिष्टमित्याशंक्याह। नहीति। येन ज्ञानेन ज्ञानितदिष्टमिन्द्रस्येति पूर्वेण संबंधः। किमिदं विशेषविज्ञानमिन्द्रस्येष्टमित्युच्यते किं वा हितमिति विवक्ष्यते तत्राद्यमंगीकरोति। सत्यमिति। द्वितीयं दूषयति। नन्विति। द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरित्यर्थः। तथापीष्टमेवेंद्राय प्रजापतिनोपदेष्टव्यमित्याशंक्याह। हितं चेति। किं तर्हि तस्य हितमिति चेत्तत्राह। व्योमवदिति। हितं वक्तव्यमिति संबंधः हितमेव न

ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेषत इतीन्द्रस्य तदिष्टं नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्युक्तत्वादिन्द्रस्येष्टं भूतानि चात्मानं च जानाति न चाप्रियं किंचिद्वेत्ति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानित्येन ज्ञानेन सत्यमेतदिष्टमिन्द्रस्येमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्वं मत्तोऽन्यदहमेषां स्वामीति नन्वेतदिन्द्रस्य हितं चेदिन्द्रस्य प्रजापतिना वक्तव्यं व्योमवदशरीरात्मतया सर्वभूतलोककामात्मत्वोपगमेन प्राप्तिस्तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिनाभिप्रेतं न तु राज्ञो यथा राज्यामिवदन्यत्वेन तत्र वसतिः केन विजानीयादात्मैकत्वदिमानि भूतान्ययमहमस्मीति नन्वस्मिन्पक्षे स्त्र्यभिध्यायात्मैवोऽस्य यदि पितृलोककामः स एकधा भवतीत्याद्यैश्वर्यश्रुतयोऽनुपपन्नाः न सर्वात्मनः सर्वफलसंबंधोपपत्तेरविरोधान्मृद इव सर्वघटरुचककुंभाद्याप्तिः॥ ननु सर्वात्मत्वे दुःखसंबंधोऽपि स्यादिति चेन्न दुःखस्या॰

त्विष्टमिति स्थिते फलितमाह। तत्रेति। सर्वेषां भूतानां लोकानां कामानां चात्मा सच्चिदानंदमात्रं तद्रूपत्वं चेन्मुक्तस्येष्यते कथं तर्हि तस्यैश्वर्यश्रुतयो निर्वहंतीति चोदयति। नन्विति। सगुणविद्यावतां यदैश्वर्यं तन्निर्गुणविद्यास्तुत्यर्थं संकीर्त्यते ब्रह्मीभूतस्य मुक्तस्य सगुणविद्याया अपि प्रत्यग्भूतत्वात्फलस्य तत्रोपचरितुं युक्तत्वादिति परिहरति। नेत्यादिना। सर्वात्मत्वे निंदापि प्राप्नोतीति शंकते। नन्विति। दुःखस्य दुःखत्वाभाववत्तस्यात्मा विद्वानपि न दुःखी भविष्यतीति समा

तर्हिदुःखिनामात्मामुक्तइतिदुःखीस्यात्तत्राह॥आत्मनीति॥नतावदात्मनःस्वभावतोदुःखित्वंकिंत्वाविद्यकंसाचमुक्तस्यदग्धेतिदग्धत्वा
दप्रसक्तिरित्यर्थः॥तर्हिविद्यापादध्यायामविद्यायांतदध्यारोपितमैश्वर्यमपीश्वरस्यसगुणविद्याफलभूतंदग्धमेवेतिकथंसत्यत्वमिहतदु
पदेशासिद्धिरित्याशंक्याह॥शुद्धेति॥शुद्धसत्वरजस्तमोभ्यांअनभिभूतंतस्मान्मायैकदेशाज्जाताःसंकल्पानिमित्तानियेषांकामानामैश्वर्यभेदा
नांतेनतथोक्तास्तेषांसर्वेषुभूतेषुविषयेषुमनोमात्रेणेश्वराभिध्यानरूपेणसिद्धानामीश्वराख्येनस्वभावेनाभिसंबंधोमायावस्थायांसिध्यतीत्य
र्थः॥ननुजीवानामेवाविद्यातत्कार्यसंबंधोनेश्वरस्येतिचेन्नेत्याह॥परएवेति॥चतुर्ष्वपिपर्यायेषुत्वमर्थानुवादेनतत्पदार्थत्वंविधेयमिति
स्वाभिप्रायेणप्रजापतिवाक्यंव्याख्यातं॥संप्रतिस्वयूथ्यमतमुत्थापयति॥यएषइति॥प्रथमपर्यायस्यछायात्मवत्द्वितीयतृतीयपर्याययो

प्यात्मत्वोपगमाद्विरोधःआत्मन्यविद्याकल्पनानिमित्तानिदुःखानिरज्ज्वामिवसर्पादिकल्पनासाचाविद्याशरीरात्मैकत्व
स्वरूपदर्शनेनदुःखनिमित्तोच्छिन्नेतिदुःखसंबंधाशंकानसंभवति॥शुद्धसत्वसंकल्पनिमित्तानांतुकामानामीश्वरदेहसंबं
धःसर्वभूतेषुमानसानांपरएवसर्वसत्वोपाधिद्वारेणभोक्तेतिसर्वाविद्याकृतसंव्यवहाराणांपरएवात्मास्पदंनान्योऽस्तीतिवेदांत
सिद्धांतः॥यएषोऽक्षिणिपुरुषोदृश्यतइतिछायापुरुषःप्रजापतिनोक्तःस्वप्नसुषुप्तयोश्चात्मएवनपरोऽपहतपाप्मत्वादिलक्षणः
विरोधादितिकेचिन्मन्यंते॥छायाद्यात्मनांचोपदेशेप्रयोजनमाचक्षते॥आदावेवोच्यमानेकिलदुर्विज्ञेयत्वात्परस्यात्मनोऽत्यं
तबाह्यविषयासक्तचेतसोऽत्यंतसूक्ष्मवस्तुश्रवणेव्यामोहोमाभूदिति॥

रपिविज्ञानात्मविषयत्वमित्याह॥स्वप्नेति॥अन्यएवपरस्मा
दुक्तइतिसंबंधःचतुर्थेऽपिपर्यायवत्पर्यायत्रयेऽपिपरमात्मैवकस्मान्नोच्यतेतत्राह॥नपरइति॥अपहतपाप्मत्वादेरवस्थावत्त्वस्यचमिथोविरोधा
दित्यर्थः॥नन्वेवंनिमेपर्यायेपरस्योपदेशोयुज्यतेतत्तुज्ञानस्यचमुक्तिफलत्वात्किमितिपूर्वेषुपर्यायेषुछायादयोनिर्दिश्यंतेतत्फलाभावादत
आह॥छायाद्यात्मनांचेति॥तत्रप्रथमंछायात्मोपदेशस्यप्रयोजनमाह॥आदावेवेति॥परस्यातिसूक्ष्मत्वेनदुर्विज्ञेयत्वात्तस्मिन्नेवादावुच्य
मानेसतितस्यापिसूक्ष्मस्यश्रवणेऽपिश्रोतुरनात्मनिष्ठस्यकिलमोहःस्यात्समाभूदितिप्राक्छायात्मोपदेशःकृतइतिसंबंधः॥स्वप्नसुषुप्तयोर्वि

यथेत्यादिना॥ इतिशब्दस्तिङन्तसंबध्यते पर्यायांतरस्यतात्पर्यमाह॥ चतुर्थेत्विति॥ मरणधर्मकाद्देहात्पृथग्भूत्वाज्योतिःस्वरूपमशरीरत्वंमा
प्तोयद्यपिचतुर्थेपर्यायेकथ्यतेतथापिकथमसौपरमात्मास्यादित्याशंक्याह॥यस्मिन्निति॥सत्संप्रसादोयोविद्वान्सकर्तृत्वेनविवक्षितः॥ किं
मिदंव्याख्यानंशब्दानुसारिकिंवार्थानुसारीतिविकल्प्याद्यमंगीकरोति॥सत्यमिति॥द्वितीयंदूषयति॥नत्विति॥अत्रभलमेवाकांक्षाद्वारस्फुरय
ति॥कथमित्यादिना॥यत्राद्यपर्याये छायात्मोपदिष्टेयेनतदींद्रविरोचनयोःसम्यग्दर्शित्वाद्विपरीतग्रहापोहार्थंप्रजापतेरायासोवृथास्या
त्तेननेदंव्याख्यानमर्थानुसारीत्यर्थः॥इतश्चनाद्यपर्यायेछायात्मोपदेशोस्तीत्याह॥किंचेति॥प्रजापतिनोपदिष्टस्यापिछायात्मनोग्रहणंनसं

यथाकिलद्वितीयायांसूक्ष्मंचंद्रंदिदर्शयिषुरेसंकंचित्प्रत्यक्षमादौदर्शयतिपश्यामुमेषचंद्रइति॥ततोन्यंततोप्यन्यंगिरि
मूर्द्धानंचचंद्रसमीपस्थमेषचंद्रइति॥ततोसौचंद्रंपश्यतिएवमेतद्यएषोक्षिणीत्याद्युक्तंप्रजापतिनात्रिभिःपर्यायैर्नपरइति॥
चतुर्थेतुपर्यायेदेहात्समुत्थायाशरीरतामापन्नोज्योतिःस्वरूपंयस्मिन्नुत्तमपुरुषेस्त्र्यादिभिर्जक्षत्क्रीडन्रममाणोभव
तिसउत्तमपुरुषःपरइतिचाहुः॥सत्यंरमणीयातावदियंव्याख्याश्रोतुनन्वथोस्यग्रंथस्यैवंसंभवतिकथंअक्षिणिपुरुषोद
श्यतइत्युपन्यस्यक्षिप्यात्मभ्यांछायात्मनिगृहीतेतयोस्तद्विपरीतग्रहणंमत्वातदपनयायोदशरावोपन्यासःकिंपश्यथइतिचप्र
श्नःसाध्वलंकारोपदेशश्चानर्थकःस्याद्यदि छायात्मैवप्रजापतिनाक्षिणिदृश्यत इत्युपदिष्टःकिंचयदिस्वयमुपदिष्टइतिग्रह
णस्यापयपनयकारणंवक्तव्यंस्यात्स्वप्नसुषुप्त्यात्मग्रहणयोरपितदपनयकारणंचस्वयंब्रूयान्नचोक्तंतेनमन्यामहेनाक्षिणिछाया
त्माप्रजापतिनोपदिष्टःकिंचान्यदक्षिणिदृष्टश्चेद्दृश्यतइत्युपदिष्टःस्यात्ततइदंयुक्तमेतंत्वेवतेइत्यनुव्याख्यास्वप्नेपिद्रष्टुरेवोपदेशःस्वप्ने
(एनद्रष्टोपदिष्ट—

ष्यतीत्याशंक्यदेहत्वंतरंस्पष्टयति॥यदीति॥तेनछायात्माग्रहेणापनयकारणवशेनेतियावत्तेनतत्प्रजापतिनेत्येवकारस्तच्छब्दोयो
ज्यः॥इतश्चप्रथमेपर्यायेद्रष्टुरेवोपदेशोनछायापुरुषस्येत्याह॥किंचान्यदिति॥एतच्छब्देनसन्निहितावलंविनाछायात्मानमनुक्रम्यस्वप्नेद्रष्टुरु
पदेशःप्रजापतेर्मृषावादित्वंप्रसज्येततथाचप्रथमेपिपर्यायेद्रष्टैवोपदिष्टइत्यर्थः॥स्वप्नावस्थाविशिष्टस्यस्थानांतरेवाध्यत्वान्नतत्रद्रष्टुरुपदे

किंचप्रकाशकारणानामुपरमेयःप्रकाशःसनैसर्गिकइतिन्यायेनप्रतीचःस्वयंज्योतिष्ट्वंबृहदारण्यकेस्वप्नावस्थामाश्रित्योक्तंतत
श्चतत्रद्रष्टुरूपदेशःसिध्यतीत्याह॥नचेति॥सूर्यादीनामुपरमेप्रकाशोदृश्यमानोनैसर्गिकइत्युक्तंस्वप्नेप्यंतःकरणस्यसत्वादित्याशं
क्याह॥यद्यपीति॥करणत्वाभावेहेतुंपृच्छति॥किंतर्हीति॥नीलपीतादिजाग्रद्वासनाभिर्विवर्त्तमानासाक्षिणीवेद्यतामापाद्यते तथाच
परेचित्रवद्धिचित्रवासनामयचेतसःसाक्षिगम्यत्वान्नस्वप्नोपलब्धौकरणंभवतीतितद्रष्टुःस्वयंज्योतिष्ट्वन्यायसिद्धमविरुद्धमित्याह॥प
रेति॥प्रासंगिकंहित्वाद्रष्टैवोपदिष्टःस्वप्नावस्थायामित्यत्रहेत्वंतरमाह किंचेति॥तथाचजाग्रदवस्थायामिवस्वप्नेपिद्रष्टैवोपदिष्टइतिशेषः

रोदितीवाप्रियवेत्तेवेत्युपदेशान्नचद्रष्टुरन्यःकश्चित्स्वप्नेमहीयमानश्चरति॥अत्रायंपुरुषःस्वयंज्योतिरितिन्यायतः
श्रुत्यंतरेसिद्धत्वाद्यद्यपिस्वप्नेसधीर्भवतितथापिनधीःस्वप्नभोगोपलब्धिंप्रतिकरणत्वंभजतेकिंतर्हिपरःचित्रवज्जा
ग्रद्वासनाश्रयादृश्यैवधीर्भवतीतिनद्रष्टुःस्वयंज्योतिष्ट्वबाधःस्यात्किंचान्यज्जाग्रत्स्वप्नयोर्भूतानिचात्मानंचजानाती
मानिभूतान्ययमहमस्मीतिप्राप्तोसत्यांप्रतिषेधोयुक्तःस्यान्नाहखल्वयमित्यादि॥तथाचेतनस्यैवाविद्यानिमित्तयोःसश
रीरत्वेसतिप्रियाप्रिययोरपहतिर्नास्तीत्युक्तातस्यैवाशरीरस्यसतोविद्यायांसत्यांसशरीरत्वप्राप्तयोःप्रतिषेधोयुक्तोऽश
रीरंवावसंतंनप्रियाप्रियेस्पृशतइतिएकश्चात्मास्वप्नबुद्धांतयोर्महामत्स्यवदसंगःसंचरतीतिश्रुत्यंतरेसिद्धंयच्चोक्तंसंप्रसा
दःशरीरात्समुत्थाययस्मिन्स्त्र्यादिभिःरममाणोभवतिसोन्यः

॥इतश्चद्रष्टुरेवोपदेशःस्वप्नदशायामित्याह॥प्राप्ताविति॥न
केवलमुक्तसौषुप्तोनिषेधोनिषेध्यप्राप्तिसापेक्षत्वादवस्थाद्वयेद्रष्टृरूपदेशमाकांक्षतिकिंतुतुरीयगतोनिषेधोनिषेध्यमाकांक्षन्नव
स्थाद्वयेद्रष्टृरूपदेशमाकांक्षतीत्याह॥तथाचेतनस्येति॥निषेधस्यप्राप्तिसापेक्षत्वात्प्रकृतस्यैवद्रष्टुरविद्यानिदानेसशरीरत्वेतन्निमि
त्तयोःस्यान्नद्वयगतयोर्नप्रियाप्रिययोरपहतिरस्तीतिनहवैसशरीरस्येत्यादिनोक्तशरीरत्वप्राप्तयोःप्रियाप्रिययोस्तस्यैवावस्थात्रया
तीतस्यसत्याविद्यायामशरीरमित्यादिनाप्रतिषेधोयुक्तइतियोजना॥स्वप्नद्रष्टृरूपदेशेहेत्वंतरमाह॥एकश्चेति॥चतुर्थपर्यायस्यसे

तदेतद्व्यतिरेकद्वारा स्फोरयति॥ यदीति॥ अधिकरणाधेयभावेन भेदः स्यान्नोनास्तीत्यत्र हेत्वन्तरमाह॥ किंचान्यदिति॥ जीवपरयोर्भेदे ष
ष्ठमपाठकविरोधवत्सप्तमपाठविरोधोपि स्यादित्याह॥ तथेति॥ बृहदारण्यकश्रुत्यालोचनायामपि जीवेश्वरभेदो न संभवतीत्याह
॥ नान्यदिति॥ इतश्च जीवपरयोर्भेदो नास्तीत्याह॥ सर्वश्रुतिष्विति॥ श्रौतमर्थमुपसंहरति॥ तस्मादिति॥ आत्मैकत्वे परस्यैव संसारित्वंस
र्वदेहेषु स्यादिति चेन्नेत्याह॥ नचेति॥ आरोपितसंसारित्वं वस्तुतो नात्मन्यस्तीत्येतद्दृष्टान्तेन स्पष्टयति॥ नहीति॥ मिथ्या च तदज्ञानं चेति मि
थ्याज्ञानं तेनाध्यस्तानि अविद्यमानान्येव विद्यमानत्वप्रतीतिमापादितानीति यावत् नहवै सशरीरस्येत्यादिवदेतावास्तवत्वं प्रियाप्रियसं

संप्रसादादधिकरणनिर्दिष्ट उत्तमः पुरुष इति तदप्यसच्चतुर्थे पर्यायेपि एतं त्वेव त इति वचनाद्यदि ततोन्योभिप्रेतः स्यात्
एवं वदेत् त्वेव त इति न प्रजापतिः किंचान्यत्तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहशुंगे प्रवेशं दर्शयित्वा प्रविष्टाय
पुनस्तत्त्वमसीत्युपदेशो मृषा प्रसज्येत तस्मिन्नत्वस्यादिभीरंताभविष्यसीतियुक्त उपदेशो भविष्यद्यदि संप्रसादादन्यः उत्तमः
पुरुषो भवेत्तथा भूम्न्यहमेवेत्यादिश्यात्मैवेदं सर्वमिति नोपसमहरिष्यद्यदि भूमा जीवादन्योऽभविष्यन्नान्योतोऽस्ति द्रष्टेत्यादि
श्रुत्यंतराच्च सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यन्नप्यगात्माचेत्सर्वजंतूनां पर आत्मा न भवेत्तस्मादेक एवात्मा
प्रकरणी सिद्धो न चात्मनः संसारित्वं अविद्याध्यस्तत्वादात्मनि संसारस्य॥ न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादी
नि मिथ्याज्ञानाध्यस्तानि तेषां भवंतीत्यनेन सशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातं यच्चस्थितम प्रियवेत्तेव तिना
प्रिय वेत्तैवेति सिद्धमेवं च समति सर्वपर्यायेष्वेतदमृतमभयमेतद्ब्रह्मेति प्रजापतेर्वचनं यदि वा

एवंबंधस्य विवक्षितमिति शंकामुक्तन्या
यानिर्देशेन निरस्यति॥ एतेनेति॥ आत्मनि संसारस्य प्रसक्तिर्नैनीति यावत्॥ यावदध्यासभावित्वं प्रियाप्रिययोरपहत्यभावेन वास्तवत्वं
शरीरसंबंधस्यैव प्रियाप्रियमूलस्य दुर्निरूपत्वादित्यर्थः॥ स्वप्नद्रष्टा खल्वप्रियवेत्तेव भवतीति नत्वप्रियवेत्तैवेति यत्पूर्वत्र स्थितं तन्न प्रसिद्धं॥
लाभांतरमाह॥ एवं चेति॥ प्रजापतेर्वचनं सत्यं भवेदिति संबंधः अपौरुषेय्यां श्रुतौ कुतः प्रजापतेर्वचनं सावकाशमित्याशंक्याह॥ परि

सुखादयः साश्रयाः गुणत्वात् रूपादिवदित्यनुमानात्तदाश्रयः परिशेषादात्मा भविष्यतीति वैशेषिकादितर्कविरोधादसत्यं श्रुतेर्वचनमित्याशं
क्याह ॥ नन्वेति ॥ सुखादीनामुपाधिधर्मत्वेन सिद्धसाध्यत्वान्नास्ति श्रौतवचसो बाधकमित्यर्थः ॥ प्रत्यक्षविरुद्धमिति शंकते ॥ नन्विति ॥ तस्याभा
सत्वान्न बाधकत्वमिति परिहरति ॥ नेत्यादिना दृष्टांतोपि संप्रतिपन्नो न भवतीति शंकते ॥ सर्वमिति ॥ जरादेः सत्यवचनं त्वदीयमेवमसत्यमेवेत्यंगीक
रोति ॥ असत्यमेवेति ॥ अंगीकारे हेतुमाह ॥ दुरवगममिति ॥ अधिकारिणः प्रमितिजनको वेद इति न्यायात्तादृशानामनधिकारिणां दुर्ज्ञानमात्मतत्वं
अतोसत्यमेव जरादिसत्यवचनं न तावत्तु सतीत्यर्थः ॥ दुरवगमत्वे लिंगमाह ॥ येनेति ॥ अत्रेति आत्मतत्वोक्तिः ॥ तस्य दुर्ज्ञानत्वे लिंगांतरमाह ॥

प्रजापति ब्रह्मरूपायाः श्रुतेर्वचनं सत्यमेव भवेन्न च तत्कुतर्कबुध्या मृषा कर्तुं युक्तं ततो गुरुतरस्य प्रमाणांतरस्यानुपपत्तेर्नेतु
प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्यनुभूयत इति चेन्न जरादिना जीर्णोहं जातोहमायुष्मान् गौरः कृशोहमित्यादिप्रत्यक्षा
नुभववत्तदुपपत्तेः ॥ सर्वमप्येतदसत्यमिति चेदसत्यमेवैतदेवं दुरवगमं येन देवराजोप्युदशरावादिदर्शितो विनाशयुक्तिरपि समो
हैवात्र विनाशमेवापीतो भवतीति ॥ तथा विरोचनो महाप्राज्ञः प्राजापत्योपि देहमात्रात्मदर्शनो बभूव तथेंद्रस्यात्मविनाशभय
सागरे एव वैनाशिकाः न्यमज्जन् तथा सांख्याद्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वान्मृत्युविषय एवान्यत्व
दर्शनेनस्थुः तथान्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः
तथान्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिवेंद्रवन्मन्यमाना घटीयंत्रवदा
रोहावरोहमकार्षुः

तथेति ॥ वैनाशिकभ्रांतिरप्यात्मनो दुर्ज्ञानत्वं गमयतीत्याह ॥ तथेति ॥ सांख्यभ्रांतिरपि दुर्ज्ञानत्वमात्मनो ज्ञापयतीत्या
ह तथा सांख्या इति ॥ तार्किकभ्रांतिरपि तस्य दुर्ग्रहत्वे गमिकेत्याह ॥ तथान्य इति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानवात्मगु
णाः ॥ मीमांसकभ्रांतिः तस्य दुर्ग्रहत्वे गमिकाइत्याह ॥ तथान्य इति ॥ यदा परीक्षकाणामपीदृशी भ्रांतिरात्मनो दुरवगमत्वं गमयति तदा विचारवि
धुराणां लौकिकानां भ्रांतिस्तत्र प्रमाणयितव्येत्याह ॥ किमन्येति ॥ अन्ये भ्रमंतीति किं वक्तव्यमिति संबंधः ॥ ९ ॥ ६ ॥ ९ ॥

यदिलौकिकानांपरीक्षकाणांचेदमात्मतत्त्वंदुर्ज्ञानंप्रतिज्ञायतेकेषांतर्हीदंसुज्ञानमित्याशंक्याह॥तस्मादिति॥एषणास्विवात्मतत्त्वेपि
तेषामौदासीन्यंवारयति॥अनन्यशरणैरितितेषांकुटीचरादिभावंव्यासेधति॥परमहंसेति॥कर्मनिष्ठानामाश्रमानतीत्यनैष्कर्म्यप्राधान्ये
नवर्तमानत्वंदर्शयति॥अंत्याश्रमिभिरिति॥अनन्यशरणैरित्युक्तंव्यनक्ति॥वेदांतेति॥पूज्यतमैरिति॥नित्यानुवादस्तेषामात्मवेदनोपा
यंप्राक्तनमुपदिशति॥प्राजापत्यंचेति॥स्थानत्रयंतुरीयंचेत्येतद्विषयंप्रकरणचतुष्टयंयथोक्ताधिकारिणामेवात्मवेदनमित्यत्रलिंगान

क्षुद्रजंतवोविवेकहीनाःस्वभावतएवबहिर्विषयापहृतचेतसःतस्मादिदंत्यक्तसर्वबाह्यैषणैरनन्यशरणैःपरमहंसपरिव्राज
कैरत्याश्रमिभिःवेदान्ततत्त्वानुवादपरैरेववेदनीयंपूज्यतमैःप्राजापत्यंचेमंसंप्रदायमनुसरद्भिरुपनिबद्धंप्रकरणचतुष्टयेन
तथानुशासन्त्यद्यापिनएवनान्यदितितत्राशरीरस्यसंप्रसादस्याऽविद्ययाशरीरेणाविशेषतांसशरीरतामेवसंप्राप्तस्यशरीरात्सु

ऽशरीरोवायुरभ्रंविद्युत्स्तनयित्नुरशरीराण्येतानितद्यथैतान्यमुष्मादाकाशात्समुत्थायपरंज्योतिरुपसंपद्य
स्वेनरूपेणाभिनिष्पद्यन्ते॥ समुत्थायस्वेनरूपेणयथाभिनिष्पत्तिस्तथावक्तव्येतिदृष्टांतउच्यतेऽशरीरोवायुःअविद्य
मानंशिरःपाण्यादिमच्छरीरमस्येत्यशरीरःकिंचाभ्रंविद्युत्स्तनयित्नुरित्येतानिचाशरीराणितत्रैवंसतिवर्षादिप्रयोजनाव
सानेयथाऽमुष्मादितिभूपिण्डाश्रुतिर्द्युलोकसंबंधिनमाकाशदेशंव्यपदिशति॥एतानियथोक्तान्याकाशसमानरूपतामाप
न्नानिस्वेनवाय्वादिरूपेणागृह्यमाणान्याकाशस्यतांगतानियथासंप्रसादो

[illegible]रमाह॥तथेति॥अशरीरमित्यादिवाक्यव्याख्यानोपसं
हारार्थमितिपदं॥सशरीरस्यबंधोमुक्तिरशरीरस्येतिस्थितेकिमर्थमशरीरोवायुरित्यादिवाक्यमित्याशंक्याह॥तत्रेत्यादिनाकथंवायोरश
रीरत्वंतत्राह॥अविद्यमानमिति॥एवंसति वाय्वादीनामशरीरत्वेसतीतियावत्॥आकाशस्यसर्वत्रैकरूपत्वादमुष्मादितिकुतोव्यपदेशसि
द्धिरित्याशंक्याह॥अमुष्मादितीति॥यथोक्तान्यशरीराणिवाय्वादीनितेषामाकाशत्वापत्तौदृष्टान्तमाह॥यथेति॥ १ ॥ ७ ॥ १

तथा वाय्वादीनि स्वेन रूपेणागृह्यमाणत्वाद्दृष्टान्ताभ्याकाशाख्यतां गतानीति संबंधस्तानि च वाय्वादीनि तथाभूतान्याकाशात्मत्वं प्राप्तानीत्येतद्दृष्टो
दि फलनिष्पत्त्यर्थं वाय्वादीनामाकाशदेशात्समुत्थानं उक्तमाकाशाद्वारेण स्फुरयति॥ कथमित्यादिना स्वेन स्वेन रूपेणाभिनिष्पद्यन्त इति संबंधः॥
तत्र वायोरभ्रस्य विद्युतस्तनयित्नोश्च स्वेन रूपेणाभिनिष्पत्तिप्रकारं विवृणोति॥ पुरोवातादीति॥ स्तिमितभावं हित्वा वायुरिति शेषः॥ दृष्टान्त
मनूद्य दार्ष्टान्तिकमाह॥ यथेति॥ वाय्वादीनामित्यस्मात् पुरस्तात्तथेत्यध्याहर्तव्यं तत्रादिशब्देनाभ्रविद्युत्स्तनयित्नवो गृह्यन्ते॥ आकाशादी

ऽविद्यावस्थायां शरीरात्मभावमेवापन्नः तानि च तथाभूतानि अमुष्माद्द्युलोकसंबंधिन आकाशदेशात्समुत्तिष्ठन्ति वर्षा
दिप्रयोजनाभिनिर्वृत्तये कथं शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसंपद्य सावित्रमभितापं प्राप्येत्यर्थः आदित्या
भितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हित्वाऽभ्रमपि भूमिपर्वतहस्त्यादि

एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुप

रूपेण विद्युदपि स्वेन ज्योतिर्लताचपलरूपेण स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणा
भिनिष्पद्यन्ते॥ यथायं दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यायां संसारावस्थायां शरीरसाम्यमापन्नोऽहममुष्य पु
त्रो जातो जीर्णो मरिष्य इति एवंप्रकारः प्रजापतिना मघवान्यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्मा तत्त्वमसीति प्रतिबो
धितः सन्स एष संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः समुत्थाय देहादिविलक्षणमात्मनो रूपमवगम्य देहात्म
भावनां हित्वेत्यर्थः स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं ॥ त्यादिपूर्वमादिकारणसंग्रहार्थं शरीरसाम्यमेव विवृ
नष्टहमिति॥ प्रतिबोधने दृष्टान्तमाह॥ प्रजापतिनेति॥ यथोक्तेन क्रमेण पर्यायचतुष्टयोपदिष्टप्रकारेणेति यावन्मघवान्प्रतिबोधित इति सं
बंधः दार्ष्टान्तिके प्रतिबोधनप्रकारं दर्शयति॥ नासीति॥ शरीरादित्युपः समुत्थाने दृष्टान्तमाह॥ आकाशादिवेति॥ समुत्थानं विभजते॥ देहादीति प्र

छां·भा· २९ | अ· ८

उत्तरवाक्यस्थं सशब्दं व्याचष्टे ॥ स येनेति ॥ स उत्तमपुरुष इति संबंधः संप्रसादस्य स्वेन रूपेणाभिनिष्पत्तिं दृष्टान्तेन स्पष्टयति ॥ प्रागित्यादिना उक्तदृष्टान्तानुसारेणाविद्यादशायां शरीरात्मत्वमापन्नो जीवो विद्यया प्रकाशितब्रह्मसतत्त्वः स्वेन रूपेणाभिनिष्पन्नो भवतीति दार्ष्टान्तमाह ॥ एवं चेति । पुरुषस्योत्तमविशेषणं पुरुषान्तरव्यवच्छेदार्थमित्यभिप्रेत्य पुरुषभेदं दर्शयति ॥ अक्षीति ॥ इति चत्वारः पुरुषा इति शेषः तत्र पूर्वेषां त्रयाणामवच्छेद्यत्वं तुरीयस्य उत्तमपुरुषत्वमित्याह ॥ एषामिति ॥ यथोक्तोत्तमपुरुषे भगवत्संमतिं संगिरते ॥ कृतेति ॥ द्वाविमौ पुरु

पुरस्तात्स येन स्वेन रूपेण संप्रसादोऽभिनिष्पद्यते ॥ प्राक्प्रतिबोधाद्रज्जुरिति निमित्तात्सर्पो भवति यथा रज्जुः पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते अत एवं च स उत्तमपुरुषः उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः स एवोत्तमपुरुषः अक्षिस्वप्नपुरुषौ व्यक्तौ अव्यक्तश्च सुषुप्तः समस्तः संप्रसन्नः शरीरश्च स्वेन रूपेणान्येषामेव स्वेन रूपेणावस्थितिः क्षराक्षरौ व्याकृ

संपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः ॥ स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा या

नाव्याकृतावपेक्ष्योत्तमपुरुषः कृतनिर्वचनो ह्ययं गीतासु स संप्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वच्छतया सर्वात्मभूतः पर्येति क्वचिदिन्द्राद्यात्मना जक्षद्धसन्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान्क्वचिन्मनोमात्रेण संकल्पादेव समुत्थितैर्ब्राह्म्ये लौकिकैर्वा क्रीडन्स्त्र्यादिभी रममाणश्च मनसैव नोपजनं स्त्रीपुंसयोरन्योन्योपगमनजायत इत्युपजनमात्मभावेन वा सामीप्येन जायत इत्युपजनमिदं शरीरं तन्न स्मरंस्तत्स्मरणे हि

॥ यो लोके क्षरश्चाक्षर एव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति हि स भगवानुविवान ॥ स तत्रेत्यादि व्याचष्टे संप्रसाद इति ॥ क्वचिदिति ॥ सूर्यलोकोक्तिः क्वचिन्मनोमात्रे क्वचित्र क्वचिदिति ब्रह्मलोको गृह्यते नोपजनमिति प्रतीकं गृहीत्वा व्याकरोति स्त्रीपुंसयोरिति ॥ तन्न स्मरन्पर्येतीति संबंधः ॥ यथोक्तदेहस्मृतौ कारण

राम २९

विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमाशंकते ॥ नन्विति ॥ असर्वज्ञत्वदोषं निराकरोति ॥ नैष दोष इति ॥ अनुभूतार्थस्मृतौ हि सर्वज्ञ इति
न च शरीराद्यनुभूतं तस्याविद्याकामकर्ममूलस्याज्ञानमात्रत्वात्तस्य च स्वकार्यस्य ज्ञानोदयमात्रेण ध्वस्तत्वात्प्रागपि शरीरादेरनुभवविपरीत
वर्तित्वानुपपत्तेरित्यर्थः ॥ शरीरादि पूर्वं सम्यग्ज्ञानेनाविषयीकृतं सद्भ्रान्त्यानुभूतमेवेति विदुषामपि स्मर्तव्यमिति चेन्नेत्याह नहीति ॥ मुक्तेपुर
वशरीरादयो न संबध्यंते चेत्कथं तर्हि तत्र कामाः संबध्येरन्नित्याशंक्याह ॥ यत्रेति ॥ किमिति सर्वैरेतैः कामा अनुभूयेरन्नित्याशंक्याह ॥ अन-

दुःखमेव स्याद्दुःखात्मकत्वात्तस्य न त्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्येत्येष दोषो येन मिथ्याज्ञानादिना जनितं तन्मिथ्या
ज्ञानादि विद्ययोच्छेदितमतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिर्नह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्य
पगमेऽपि स्मर्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तत्तत्त्वविन्मानमशरीरं न स्पृशति अविद्यानिमित्ताभा

नैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ ॥

वाद्येन त्वविच्छिन्नदोषैर्मूढैरितरक्षुद्रैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयंते विद्याभिर्व्यंग्यत्वात्त एव मुक्तेन सर्वात्मभूते
न संबध्यंत इत्यात्मज्ञानस्तुतये निर्दिश्यंते ॥ अतः साध्वेतद्धि शिनष्टि य एते ब्रह्मलोक इति ॥ यत्र क्वचन भवंतोऽपि ब्रह्मण्येव
हि ते लोके भवंतीति सर्वात्मत्वाद्ब्रह्मण उच्यंते न त्वत्र कथमेकः सन्नात्मा न पश्यति नान्यद्विजानातीति भूम्नः कामांश्च ब्राह्मलौकिका
न्पश्यन्रमत इति च विरुद्धं ॥ यथैको स ॥ नापिधानादिति ॥ इतश्च विदुषामेव तदभिव्यक्तिरित्याह ॥ विद्ययेति ॥ किमिति निर्गुणविद्याप्र
करणे विदुषि सत्यकामसंबंधवचनं तत्राह ॥ इत्यात्मज्ञानेति ॥ आत्मविद्यास्तुत्यर्थं विदुषामपि कामसंबंधवचनं मनसैतान्कामान्प
श्यन्नित्यत्र विशेषश्रवणमपि युक्तमित्याह ॥ अत इति ॥ इंद्रियादिषु भवतां कामानां कीनाशब्रह्मलोकभावित्वमित्याशंक्याह ॥ य एत इति ॥
मनसैतान्कामानित्यादिवाक्यं स्तुत्यर्थमपि प्रधानवाक्यविरुद्धत्वात्त्याज्यमिति शंकते ॥ नन्विति ॥ वाक्ययोर्मिथो विरोधे दृष्टांतमाह ॥ यथेति ॥

यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति बृहदारण्य
कश्रुतिमाश्रित्य विरोधं धुनीते॥ नैष दोष इति॥ अथ यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तविषयतयोदाहृतमत आह॥ यद्यपीति॥ सुषु
प्तस्य मोक्षदृष्टान्तत्वात्तद्गतस्य चक्षुर्द्रष्टा निकेतनगमाद्युक्तं सुषुप्ते तत्सम्बन्धो मुक्ते सिध्यतीत्यर्थः॥ किंच मुक्तमेवाधिकृत्य यत्र त्वस्य सर्वमात्मैवाभू
दित्यादि तत्रैवोक्तमित्याह॥ केनेति॥ फलार्थवादस्याशिवाक्यस्य च मिथो विरोधं शङ्कते॥ अशरीर इति॥ दृश्यत इत्यस्य पदस्य चाक्षुषदर्शने
रूढत्वाद् अशरीरस्य तदयोग्यत्वाद् अशरीरात्मोक्तिर्दृश्यत इति श्रुतिविरुद्धेत्यर्थः॥ आत्मत्वामृतत्वादिब्रह्मविषयानेकश्रुतिलिङ्गविरोधाद्दृश्य

यस्मिन्नेव क्षणे पश्यति तस्मिन्नेव क्षणे न पश्यति चेति नैष दोषः श्रुत्यन्तरे परिहृतत्वाद् द्रष्टुर्दृष्टेर्विपरिलोपात्पश्यन्ने
व भवति द्रष्टुरन्यत्वेन कामाभावान्न पश्यति चेति यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः केन कं
पश्येदिति चोक्तमेव अशरीरस्य सत उपहतपाप्मादिलक्षणः सन् कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना तत्र यथा

स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः॥ ३॥

स वाक्षिणि साक्षाद्दृश्यते न तद्युक्तमिति इदमारभ्यते तत्र को हेतुरक्षिणि दर्शने इत्याह सदृष्टान्तः यथा प्रयोग्यः प्रयोग्य प
रो वा स शब्दः प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा यथा लोके आचरन्त्यनेनेत्याचरणो रथोऽनो वा तस्मिन्नाचरणे युक्त
स्तदाकर्षणाय एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिः

नन्वेकस्याः श्रुतेर्ज्ञानमात्रविषयविरोधोऽस्तीत्यभिप्रेत्यानन्तरवाक्य
मुत्थापयति॥ तत्रेति॥ चाक्षुषदर्शनाविषयत्वे सति चक्षुषो दर्शने को हेतुरित्यपेक्षायां लिङ्गहेतुकं तावद्दर्शनं संभवतीति मत्वा दृष्टान्तमाह
श्रुतिः सदृष्टान्तो यथा भवति तथोच्यत इत्याह॥ तत्रेति॥ तमेव दृष्टान्तमनूद्य व्याचष्टे॥ यथेत्यादिना॥ अध्याहाररहित्यसिद्ध्यर्थं पक्षान्तरमा
ह॥ प्रयोग्येति॥ एवमित्यनेन द्वितीयो यथाशब्दः संबध्यते॥ शरीरस्य रथस्थानीयत्वं शरीरं रथमेव तु इति श्रुत्यन्तरान्मतं॥ तस्मिन्युक्तः सर

बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इंद्रियाणि हयानाहुरिति श्रुत्यंतरमाश्रित्याह॥ इंद्रियेति॥ आत्मानं रथिनं विद्धीति श्रुतिविरुद्धं प्राणस्य रथित्वमित्याशंक्य तस्योपाधियं तद्भेदांगीकारान्नैवमित्याह॥ महात्मेति॥ तस्याध्यात्मसंतानद्रुमविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति॥ विज्ञानेति॥ ईश्वरस्य यथोक्तप्राणोपाधिद्वारा भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यंतरं प्रमाणयति॥ कस्मिन्निति॥ प्रतिष्ठास्यामीति॥ ईक्षित्वा स प्राणमसृजतेत्यादिश्रुतिरिति शेषः तथा च यथा राज्ञा सर्वाधिकारी सेनाध्यक्षः संधिविग्रहादौ नियुज्यते तथेश्वरेण सर्वचेष्टानराधिकृतस्वकीयदर्शनादिव्यापारनिमित्ते नियुक्तो भवतीत्याह॥ राज्ञेति॥ प्राणः स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वाद्रथादिवदित्यनुमानाद्देहसंहतात्प्राण॥

इंद्रियमनोबुद्धिसंयुक्तः महात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्च्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तनियुक्तः॥ कस्मिन्न्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ईश्वरेण राज्ञा इव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृ

ऽथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षु

तः तस्यैव तु मात्रैकदेशः चक्षुरिंद्रियं रूपोपलब्धिद्वारभूतं॥ अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णं अनुषक्तमनुगतं तत्र स प्रकृतो शरीर आत्मा चाक्षुषश्चक्षुषि भवतीति चाक्षुषः स दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तेद्देहादिभिः

इति विक्तो संहतस्य चेतनः सिध्यतीति समुदायार्थः॥ चक्षुरादि चेष्टा चेतननिमित्ता चेष्टात्वात् द्रष्टावदित्यनुमानांतरं सूचयति॥ तस्यैवेति॥ प्रकृतप्राणविषयस्य तु तु मात्रेत्यतस्य व्याख्यानमेकदेश इति॥ प्राणसंवादे चक्षुरादीनां प्राणपारतंत्र्यप्रतीतेस्तदेकदेशत्वं तेषामिति द्रष्टव्यं॥ शरीराद्व्यतिरिक्तमात्मानं संभाव्य तस्यौपाधिकत्वं द्रष्टृत्वमाचष्टे॥ अथेति॥ अतिरिक्तात्मसंभावनानंतरमथशब्दार्थः॥ यत्र तत्रेति॥ सप्तमीभ्यां संसारदेशोच्यते॥ अनुगतं चक्षुरिति संबंधः दर्शनाय चक्षुरित्यस्यार्थं समर्थयते॥ यस्येति॥ यस्य परस्य द्रष्टुरर्थं करणं चक्षुरित्युपरश्चक्षुषा लिङ्गेन दृश्यत इति संबंधः परार्थे चक्षुषो हेतुमाह॥ देहादिभिरिति॥ यत्संहतं तत्स्वविलक्षणशेषदृष्टं यथा शयनासनादि तथा

संहतत्वाद्यस्य विलक्षणस्य शेषभूतं सोऽत्र दर्शनेन दृश्यते विमतं साश्रयं धर्मत्वाद्रूपादिवदित्यनुमानादित्यर्थः॥ दृश्यत इत्यस्य विरु
द्धार्थत्वमुक्त्वाऽक्षिणीत्यस्य विवक्षितमर्थमाह॥ अक्षिणीति॥ यथाक्षिद्वाररूपोपलब्धा परस्तथा तत्तदिन्द्रियद्वारा तत्तद्विषयोपलब्धा
पर एवेति कृत्वा प्रयुक्तमिदमुपलक्षणमिति साधयति॥ विषयेति॥ सर्वेन्द्रियैरुपलब्धृत्वमविशिष्टं चेत्कथं तर्हि सर्वास्वपि श्रुतिषु चक्षु
ष्येवास्योपदिश्यते तत्राह स्फुटेति॥ चक्षुषः स्फुटोपलब्धिहेतुत्वे श्रुतिं संवादयति॥ अहमिति॥ यत्रादर्शमिति चक्षुषः प्रत्ययस्तद्वस्तु स
त्यं स्फुटोपलंभादिति द्वयोर्विवदमानयोरिदमित्यर्थः॥ य एषोऽक्षिणीत्यत्र सर्वेन्द्रियद्वारोपलब्धा विवक्षित इत्युक्तं व्यक्तीकरोति॥ अथापी

संहतत्वात्परस्य द्रष्टुरर्थे सोऽत्र चक्षुषि दर्शनेन लिंगेन दृश्यते परोऽशरीरोऽसंहतोऽक्षिणि दृश्यत इति प्रजापतिनोक्तं सर्वेन्द्रिय
द्वारोपलक्षणार्थं सर्वविषयोपलब्धा हि स एवेति स्फुटोपलब्धिहेतुत्वादक्षिणीति विशेषवचनं सर्वश्रुतिषु अहमदर्शमिति
तत्सत्यं भवतीति च श्रुतेः॥ अथापि योऽस्मिन्देहे वेद कथमिदं सुगंधि दुर्गंधि वा जिघ्राणीत्यस्य गंधं विजानीयामिति स आ

थ यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो

त्मा तस्य गंधाय गंधविज्ञानाय घ्राणमथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति स आत्माभिव्याहरणक्रिया
सिद्धये करणं वागिन्द्रियमथ यो वेदेदं शृण्वानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंप्र
युक्तं केवलं मन्वानीति वेद स आ

ति॥ चक्षुषि स्फुटोपलंभेऽपीति यावद्योऽस्मिन्देहे येन केनापीन्द्रियेण यं कंचिद्विषयं वेद स आत्मेति सं
बंधः॥ उक्तमेवार्थमाकांक्षाद्वारा स्फोरयति॥ कथमित्यादिना॥ जिघ्राणीति यो वेदेत्युक्तमेव संक्षिपति॥ अस्येति॥ इन्द्रियैर्घ्राणादिभिर
संपृक्तं तत्तद्द्वारेण निष्पन्नमिति यावत्॥ केवलमनोमात्रजनितमित्येतन्मन्वानीति संपादानीत्यर्थः॥ वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्ष
त्वान्मिथ्या प्रकृत्यर्थरूपं तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमित्याह॥ यो वेदेति॥ आत्मा संवेदनस्वभावश्चेत्तत्संसर्गादेव विषयसि

दर्शनादीति॥ अंतःकरणवृत्तिर्दर्शनादिक्रिया सा चात्मनः संविदेकरसस्यासंगोदासीने विषयसंसर्गभ्रमहेतुस्तन्निष्पत्त्यर्थानि चक्षुरा-
दीनि संभवंति सार्थकानीत्यर्थः॥ तेषामुक्तरीत्या सार्थकत्वे गमकमाह॥ इदं चेति॥ करणानामुक्तं सार्थकत्वं प्रकृतस्य संविन्मात्रस्यासंगत्वा-
देव स्वतो विषयसंबंधानुपपत्त्या तत्संबंधभ्रांतिकारणांतःकरणवृत्तिविशेषापेक्षया निर्धारितमित्यर्थः॥ आत्मनः संविन्मात्रस्वभावत्वेऽक-

स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनसमस्य स्वरूपमित्यवगम्यते॥ यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो दक्षिणेन यः प-
श्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति आदित्य इत्युक्ते प्रकाशस्वरूपः स इति गम्यते॥ दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादि-
करणानि इदं चास्यात्मनः सामर्थ्यादवगम्यते॥ आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं न तु व्यापृततया यथा सवितुः सत्तामा-
त्र एव प्रकाशनकर्तृत्वं न तु व्यापृततयेति तद्वत्॥ मनोऽस्यात्मनो दैवमप्राकृतमितरैरिंद्रियैरसाधारणं चक्षुः चष्टे पश्यत्यनेनेति व-

वेदेदꣳ शृण्वानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा॥ मनोऽस्य दैवं चक्षुः स वा एष एते-
न दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च
लोका आत्ताः

र्तमानकालविषयाणि चेंद्रियाण्यतोऽदैवानि तानि मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च
सूक्ष्मव्यवहितादिसर्वोपलब्धिकारणं चेति दैवं चक्षुरुच्यते॥ स वै मुक्तस्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभा-
वमापन्नः सन्नेष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैवेश्वरेण मनसैतान्कामान् सवितृप्रकाशवन्नित्यप्रवृत्तेन प-

र्थकर्तृत्वव्यपदेशः स्यादित्याशंक्याह॥ आत्मन इति॥ य एषोऽक्षिणीत्यादिवाक्यप्रपंचितं संप्रति सत्तेत्यादिफलवाक्यप्रपंचयितुमिंद्रियात्तेभ्यो
मनसो वैलक्षण्यं दर्शयति॥ मनोऽस्येति॥ तस्य चक्षुष्ट्वेऽपि कुतो दैवत्वमित्याशंक्याह॥ वर्तमानेति॥ आगंतुकदोषराहित्यं मृदितदोषत्वं सर्वेभ्यो
अव्यवधानेन पश्यति विशुद्धे मनसि तन्मनः सर्वेश्वरं तदुपाधिरस्येति तथोक्तः ईश्वरेण तदभिव्यंजकेनेत्येतदविद्यादिप्रतिबंधकस्याभावान्मनसाति

दर्शनं नित्याभिव्यक्तस्वरूपं चैतन्यं तेन पश्यन्निति योजना । तं वा एतमित्यादि व्याचष्टे ॥ यस्मादिति ॥ पदार्थमुक्त्वा वाक्यार्थमाह ॥ यदर्थं हीति ॥ स सर्वांश्चेत्यादिवाक्यमाशंकोत्तरत्वेनोत्थाप्य व्याचष्टे ॥ तदुक्तमित्यादिना यथोक्तफलं तच्छब्दार्थः ॥ प्रकरणं निर्विशेषब्रह्मात्मैकत्वज्ञानविषयं दहरविद्याप्रकरणे ऽउपास्यवस्तुन्यर्थप्रसंगादुक्तं तत्परिसमाप्त्यर्थः ॥ १२ ॥ प्रकृतायां दहरविद्यायाः शेषभूतजपविधानार्थमारभ्यते ॥ श्याम

कान्कामानिति विशिनष्टि ॥ य एते ब्रह्मणि लोके ब्रह्मलोके हिरण्यनिधिवद्बाह्यविषयासंगानृतेनापिहिताः संकल्पमात्रलभ्यास्तानित्यर्थो यस्माद्देवराडिन्द्राय प्रजापतिनोक्त आत्मा तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः । यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः ॥ तद्युक्तं देवानां महाभाग्यत्वान्न त्विदानीं मनुष्याणामल्पजीवितत्वान्मन्दतरप्रज्ञात्वाच्च संभवतीति प्राप्त इदमुच्यते स सर्वांश्च लोका

सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ह प्रजापतिरुवाच ॥ १२ ॥ श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव रा‹‹होर्मुखात्प्रमुच्य

नाप्नोति सर्वांश्च कामानिदानींतनोऽपि कोऽसौ यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः द्विर्वचनं प्रकरणसमाप्त्यर्थम् ॥ १२ ॥ श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जपार्थश्च ध्यानार्थो वा श्यामो गंभीरो वर्णः श्यामवत् श्यामो हार्दं ब्रह्म अत्यन्तदुरवगाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्याद्यनेककाममिश्रितत्वाद्ब्रह्मलोकस्य शानत्यन्तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपातादूर्ध्वं गच्छेयं यस्मादहं ‹‹मादिति ॥ अत्यन्तं दुरवगाह्यत्वाज्ज्ञानहीनानामिति शेषः ॥ कथं जीवतो ब्रह्मलोकप्राप्तिरित्याशंक्याह ॥ मनसेति ॥ न तर्हि मुख्या तत्प्राप्तिरिति आशंक्याह ॥ शरीरेति ॥ विपरीतपाठहेतुत्वेन व्याचष्टे ॥ यस्मादिति ॥ दे

दृष्टांतमाकांक्षापूर्वकमवतार्यव्याचष्टे॥कथमित्यादिना॥शरीरस्यत्याज्यत्वेहेतुमाह॥सर्वानर्थेति॥इतिशब्दोध्यातुर्ध्यानसमाप्त्यर्थः॥१॥आदह
रोस्मिन्नंतराकाशइतिलक्षणनिर्देशस्यप्रकृतोपयोगंदर्शयति॥आध्यानायेति॥सर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतआकाश
प्रत्यस्तंयंत्याकाशोह्येवेभ्योज्यायानित्यादिश्रुतयः॥आकाशशब्देनात्मनःश्रुतिषुप्रसिद्धत्वेहेतुमाह॥आकाशइवेति॥तेयदंतरेत्यत्रतेइति

शबलाद्ब्रह्मलोकान्नामरूपव्याकरणायश्यामंप्रपद्येहार्दंभावंप्रपन्नोस्मीत्यभिप्रायःअतस्तमेवमप्रकृतस्वरूपमात्मानंशव
लंप्रपद्यइत्यर्थःकथंशबलंब्रह्मलोकंप्रपद्यइत्युच्यते॥अश्वइवस्वानिलोमानिविधूयकंपनेनश्रमंपांस्वादिचरोमतोऽपनीय
यथानिर्मलोभवतिइत्येवहार्दब्रह्मज्ञानेनविधूयपापंधर्माधर्मारव्यंचंद्रइवराहुग्रस्तस्तस्माद्राहोःप्रमुच्यभास्वरोभवतिय
थैवंधूत्वाप्रहायशरीरंसर्वानर्थाश्रयंइहैवध्यानेनकृतात्माकृतकृत्यःसन्नकृतंनित्यंब्रह्मलोकमभिसंभवामीतिद्विर्वचनंमंत्र

धूत्वाशरीरमकृतंकृतात्माब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति॥१॥आकाशोवैनामनामरूपयोर्निर्व
हितातेयदंतरातद्ब्रह्मतदमृतं४सआत्माप्रजापतेःसभांवेश्मप्रपद्येयशोहंभवामिब्राह्मणानांयशोराज्ञांयशोवि
((शां

समाप्त्यर्थं॥१॥आकाशोवैइत्यादिब्रह्मणोलक्षणनिर्देशार्थमाध्यानायाकाशोवैनामश्रुतिषुप्रसिद्धआत्माआकाश
इवाशरीरत्वात्सूक्ष्मत्वाच्चसचाकाशोनामरूपयोःस्वात्मस्थयोर्जगद्बीजयोःसलिलस्येवफेनसंस्थानीययोर्निर्वहितानिर्वो
ढाव्याकर्तातेनामरूपेयदंतरायस्यब्रह्मणोंतरामध्येवर्तेते॥तयोर्वानामरूपयोरंतरामध्येयन्नामरूपाभ्यामसंस्पृष्टंयदि
त्येतद्ब्रह्मनामरूपविलक्षणंचनामरूपाभ्यामस्पृष्टंतथापितयोर्निर्वोढृचेत्यर्थः॥((पदंप्रथमाद्विवचनांतंग्र

हीत्वाव्याख्यायद्वितीयाद्विवचनांतंषष्ठ्यर्थमादायव्याचष्टे॥तयोर्वेति॥यदंतरेतिसमस्तंपदंपूर्वत्रव्याख्यातंअधुनातुव्यस्तंव्याकृतं॥तदेवव्या
करणंसंक्षिपति॥नामरूपाभ्यामिति॥ताभ्यामस्पृष्टंचेत्कथंतन्निर्वाहकंइत्याशंक्याह॥नामरूपाभ्यामस्पृष्टमिति॥ ॥ ९ ॥

न्त्यावस्थादितिशेषः॥आत्मत्वेपिकथंकरतलामलकवद्ब्रह्मणोपरोक्षत्वमतआह॥आत्माहीति॥तेनस्वसंवेद्यत्वेनेत्यावर्तत कुतोदे
हद्वयोपहितस्यात्मनःस्वसंवेद्यत्वंतत्राह॥अशरीरइतिपरिच्छिन्नस्याशरीरत्वमयुक्तमित्याशंक्याह॥व्योमवदिति॥ब्रह्मैवप्रत्यक्
भूतमितिकथमवगतमित्याशंक्याह॥आत्मेति॥अनात्मत्वेचेदब्रह्मत्वप्रसंगात्प्रत्यग्भूतंब्रह्मावक्तव्यमित्यर्थः॥उपास्यस्वरूपंदर्शयि

इदमेवमैत्रेयीब्राह्मणेनोक्तंचिन्मात्रानुगमात्सर्वत्रचित्स्वरूपतैवेतिगम्यतेएकवाक्यतयाकथंनुइदमवगम्यतेइत्याह
सआत्माहिनामसर्वजंतूनांप्रत्यक्चेतनःस्वसंवेद्यःप्रसिद्धःतेनस्वरूपेणानंतोऽशरीरोव्योमवत्सर्वगतआत्माब्रह्मे
त्यवगंतव्यंतच्चब्रह्मामृतममरणधर्माअतऊर्ध्वंमंत्रःप्रजापतिश्चतुर्मुखस्तस्यसभांवेश्मप्रभुविमितंवेश्मप्रपद्येगच्छे
यंकिंचयशोऽहंयशोनामात्माहंभवामिब्राह्मणानांब्राह्मणाएवहिविशेषतस्तमुपासतेततस्तेषांयशोभवामितथारा

यशोऽहमनुप्रापत्सिसहाहंयशसांयशःश्वेतमदत्कमदत्कंश्वेतंलिंदुमाभिगांलिंदुमाभिगां॥१५॥तद्धैतद्

ज्ञांविशांचतेप्यधिकृताएवेतितेषामप्यात्माभवामितद्यशोऽहमनुप्रापत्सिप्राप्स्यामिप्राप्तुमिच्छामि॥सहाहंयशसामा
त्मनांदेहेंद्रियमनोबुद्धिलक्षणानामात्माकिमर्थमहमेवंप्रपद्येइत्युच्यते॥श्वेतंवर्णतःपक्वबदरसमंरोहितंचस्त्रीचिह्नं
योनिशब्दितंकिंलक्षणंतत्अदत्कंदंतरहितमप्यदत्कंभक्षयितृतेजोबलवीर्यविज्ञानधर्माणामपहंतृविनाशयितृइत्येतत्त
त्सेविनांस्त्रीव्यंजनंयदेवंलक्षणंश्वेतंलिंदुपिच्छिलंतंमाभिगांमाभिगच्छेयं॥द्विर्वचनमत्यंतानर्थहेतुत्वप्रदर्शनार्थं॥ १५ ॥

त्वातदुपासकस्यप्रार्थनामंत्रमुत्थाप्यव्याकरोति॥अतऊर्ध्वमिति॥प्रथमतोब्राह्मणग्रहणेहेतुमाह॥ब्राह्मणाएवेति॥विशेषंनिर्दिशति॥स्त्री
व्यंजनमिति॥योनिशब्दितंप्रजननेंद्रियमित्यर्थः॥कथंतद्भक्षयितृभवेत्तदाह॥तत्सेविनामिति॥तदभिगमनंनामगर्भवासस्तस्यातिशयेना
नर्थहेतुत्वंज्ञापयितुंद्विर्वचनमित्यर्थः॥१५॥उक्तविज्ञानस्यात्यंतिकत्वशंकामुदस्यन्नन्नादिपारंपर्यागतत्वंदर्शयति॥तद्धैतदिति॥सोपकरण

तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः ॥ विद्याप्रकरणपरिसमाप्ताविद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थं कथयति ॥ यथेत्यादि
मो मित्येतदक्षरमित्यादेः सहोपासनेन तद्वाचकेन ग्रंथेनाष्टाध्यायलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण
प्रजापतये कश्यपायोवाचासावपि मनवे स्वपुत्राय मनुः प्रजाभ्य इत्येवं श्रुत्यर्थसंप्रदायपरंपरागतं उपनिषद्विज्ञानमद्या
पि विद्वत्स्ववगम्यते ॥ यथेह षष्ठाद्यध्यायत्रये प्रकाशितानां विद्यानां सफलावगम्यते तथा कर्मणामनकश्चनार्थेदूति प्राप्ते तदा
नर्थक्यप्राप्तिं परिजिहीर्षयेदं कर्मविद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते ॥ आचार्यकुलाद्वेदमधीत्य
सहार्थतोऽध्ययनं कृत्वा यथाविधानं यथा स्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं
प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन का

ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणा
भिसमावृत्य कुटुंबे ॥ शुचौ देशे स्वाध्यायमधीयानो ॥

लेन वेदमधीत्येत्यर्थः ॥ एवं हि नियमवताधीतो यो वेदः कर्मज्ञान
फलप्राप्तये भवति नान्यथेत्यभिप्रायो ऽभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कु
टुंबे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः ॥ तत्रापि गार्हस्थ्यविहितानां कर्मणां ॥ स्वाध्यायस्य प्राधान्यप्रदर्शनार्थ
मुच्यते ॥ शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्तितः ऋगाद्यभ्यासं च
कुर्वन् धार्मिकान् पुत्रान् शिष्यांश्च धर्मयुक्तान् विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रिया
णि प्रतिष्ठाप्योपसंहृत्य सर्वेन्द्रियग्रहणात्कर्माणि च सन्न्यस्याहिंसन् हिंसा परपीडामकुर्वन् इहेति प्रकृतोपनिषदुक्तिः प्राङ्मु
खत्वपवित्रपाणित्वादयो नियमाः भिक्षाशनस्नानाचमनादिविधिः किमित्येष नियमोऽध्ययने कर्तव्यं ते तत्राह ॥ एवं हीति ॥ तत्रापीति सस

एतत्सर्वं स्वयं कुर्वन् ब्रह्मलोकमभिसंपद्यत इति संबंधः॥ एवं वर्तयन्निति त्यस्य व्याख्यानं॥ एवं यथोक्तप्रकारेण कुर्वन्निति अप्राप्तप्रतिषेधा शंकां वारयति॥ पुनरावर्तेरिति॥ चंद्रलोकादिवत् ब्रह्मलोकादपि प्राप्तापुनरावृत्तिस्तस्यानर्चिरादिनाप्रतिषेधान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः ॥ अपुनरावृत्तिवाक्यस्यान्यक्षराणि व्याकरोति॥ अर्चिरादिनेति॥ प्रागिति॥ महाप्रलयात्पूर्वकालोक्तिस्ततो ब्रह्मलोकादित्यर्थः॥ विपरीताद्विज

सर्वभूतानि स्थावरजंगमानि भूतान्यपीडयन्नित्यर्थः भिक्षानिमित्तमटनादिनापरपीडा स्यादित्यत आहान्यत्र तीर्थेभ्यस्तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः सर्वाश्रमिणां चैतत्समानं तीर्थेभ्योऽन्यत्राहिंसैवेत्यन्ये वर्णयंति॥ कुटुंब एवैतत्सर्वं कुर्वन् स खल्वधिकृतो यावदायुषं यावज्जीवं एवं यथोक्तप्रकारेणैवं वर्तयन् ब्रह्मलोकमभिसंपद्यते देहांते॥ न च पुनरावर्तते पुनरावृत्तेः प्राप्तायाः प्रतिषेधात्॥ अर्चिरादिना मार्गेण कार्यं ब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति॥ प्राक्ततो नावर्तत

धार्मिकान्विदधदात्मनि सर्वेंद्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते॥ १५॥ ॐ इति छांदोग्योपनिषद्ब्राह्मणेऽष्टमः प्रपाठकः समाप्तः॥ ८॥ शुभं

इत्यर्थः॥ द्विरभ्यासउपनिषद्विद्यापरिसमाप्त्यर्थः॥ १५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविंदभगवत्पादशिष्यशंकरानंदेन कृते छांदोग्योपनिषद्विवरणे अष्टमोऽध्यायः समाप्तः॥ ८॥ अस्याध्यायस्य सं॰ भाष्यं ७५० टी॰ ८५० एवं सर्वसंख्या मूलं १२५०

भाष्यं ४१५० टीका ५१०० एकत्र १०५०० सम्पूर्णं

गज्ञानं जातमज्ञानतो यतः॥ तदस्मिनामरूपादिविरहितं ब्रह्म निर्भयं॥ नमस्त्र्यंतसंदोहसरसीरुह भानवे॥ गुरवे परपक्षौघध्वांतध्वंसपटीयसे॥ हरिः ॐ इति श्रीमच्छुद्धानंदपूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य भगवदानंदगिरिकृतौ छांदोग्योपनिषद्भाष्यटीकायामष्टमोऽध्यायः समाप्तः ८॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः काशीसंस्कृतमुद्रायामंकितोऽयं शिलाक्षरैः॥ १॥ श्रीकाशीजीमें महल्लेहौदकटोरा श्रीयुत बाबू वाराणसीप्रसादजी के मकान में काशीसंस्कृतमुद्रायंत्र में छपी जिनको लेना हो यह उनको उक्तस्थान में श्रीबाबूवा

॥इतिसटीकछांदोग्योपनिषद्भाष्यस्यअष्टमोध्यायःसमाप्तः॥

